

# राष्ट्रिय संस्कृत संस्थानम्

नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ३७ ॥

अथ

# मेघमाला

डा० सर्वनारायणझाशर्मणा सम्पादिता

भावानुवादभाविता



# Rashtriya Sanskrit Sansthan

*( Under the auspices of the Ministry of Human Resources Development, Govt. of India )*

**New Delhi**



**Ganganatha Jha Kendriya Sanskrit Vidyapitha**

**TEXT SERIES**



*General Editor*

**Dr. G. C. Tripathi**



# No. 37

# MEGHAMĀLĀ

*Edited by*

Dr. Sarva Narayan Jha




ALLAHABAD

1993

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयमानवसंसाधनविकासमन्त्रालयस्याङ्गभूतम् )
नवदेहली

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

—०—

सप्तत्रिंशं प्रसूनम्

# मेघमाला

( भावानुवादभाविता )

—०—

सम्पादकः
डॉ० सर्वनारायण झा

—०—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
इलाहाबादः—२११००२
१९९३

# मेघमाला

[ भावानुवादभाविता ]

सम्पादकः

डॉ० सर्वनारायण झा



श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

चन्द्रशेखर आज़ाद पार्क

प्रयाग-२११००२

१९९३ ई०

प्रकाशकः
डॉ० गयाचरण त्रिपाठी
प्राचार्यः
गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
इलाहाबाद-२



मूल्यम्

978-93-83135-60-8

मुद्रकः
शाकुन्तल मुद्रणालयः
३४; बलरामपुर हाउस
इलाहाबाद-२

## FOREWORD

We are happy to place in the hands of Sanskritists the *Meghamālā* ( 'Wreath of Clouds' ) which is a work unique in its kind and nature. This work which is being presented to the Sanskrit World for the first time is an interesting text belonging partly to the field of Astrology and partly to Ominology ( *Śakuna Śāstra* ). A large portion of this work deals with the issues which now a days form part of the scientific discipline of Meteorology or Weather Science. Our author, however, makes his predictions about rain and weather by simply observing the positions of Planets in conjunction with various constellations and the like. But he is not contented by simply making his observations regarding the Wind and Weather. He proceeds further and makes predictions regarding the quality of a crop and also the prices of different commodities in the harvest season to come. He also pays attention to the general well-being of the various social groups and geograhpical regions.

The Sanskrit of Meghamālā is not chaste and grammatically pure at many places. It is something like "Brahmanical Hybrid-Sanskrit" which clearly expresses its purpurt and purpose but often flouts the rules of Pāṇini. A number of works belonging to the disciplines of Vāstu-Śastra, Jyotiṣa, and Tantra etc. were composed in this type of Brahmanical Hybrid Sanskrit in the medieval ages ( after 1000 AD.) when the standard of Sanskrit sank but not its popularity or sacred character.

This edition of Meghamālā is based on a number of MSS preserved in the Manuscripts Library of this Vidyapeetha as well as procured from the Sarasvati Bhawan Library of Varanasi. It has also been translated into simple Hindi so that it may reach out to common people who are interested usually in its subject matter but lack the adequate knowledge of Sanskrit in order to relish it in original.

The Hindi translation has one more purpose. Hundreds of proverbs and pithy sayings in colloquial Hindi dialects ascribed to *Ghāgha* and *Bhaḍḍarī* are prevalent in this part of India which bear close similarity to the utterences and observations found in the Meghamālā. Bhaḍḍari, in particular, was a great Astrologer and Meteorologist whose advices and instructions, which are based mainly on the position of Planets and Constellations and which relate to agriculture, are closely followed by the farmers for their agricultural activities. A Hindi translation of this work shall therefore induce and encourage a sort of comparative study between the two traditions—the local, colloquial, folk-tradition and the classical, Śastric, Sanskrit tradition.

Astrological Meteorology is an ancient science based on keen observation of planetery and atmospheric conditions for hundreds of years. The modern man is often inclined to brush it aside as 'superstition'. But I believe that we have no right to dub it as such unless we have closely and minutely observed the phenomena mentioned in such texts, for a number of years. The process of ascertaining the availability of ground water at a given spot as explained in the *Bṛhatsaṃhitā* of Varahamihira has recently proved itself to be so accurate that the Scientists were

amazed at it. It may be the case with a number of phenomena mentioned in the Meghamālā too. They may not be infallibly and invariably reliable, but is it not true that weather forecasts of even today based on satellites and computors go astray sometimes ?

In fact the texts like Meghamālā do not envisage a *Cause* and *Effect* relationship between planatory conditions or Omina and Natural Happenings. According to Indian Astrology, Planatory conditions are simply *Indicatians* of what is going to happen in future.

I congratulate Dr. S. N. Jha, Lecturer in Jyotiṣa at this Vidyapeetha, for making this excellent work available to us and hope that it will have relevance for both the Astrologers as well as modern Scientists/Meteorogists.

G. N. Jha K. S. Vidyapeetha
Allahabad
25-6-93

**Gaya C. Tripathi**
*Principal*



# भूमिका

वेदचक्षुः किलेदं स्मृतं ज्यौतिषम्
मुख्यता चाङ्गमध्येऽस्य तेनोच्यते ।
संयुतोपीतरैः कर्णनासादिभिः
चक्षुषाङ्गेन हीनो न किञ्चित्करः[1] ।।

चक्षूरुपज्योतिः शास्त्रं विना न कैश्चिदपि किमपि द्रष्टुं ज्ञातुं च शक्यते । षडङ्गेषु ज्योतिषशास्त्रमिदं दिग्देशकालव्यञ्जकत्वेन सकल-शास्त्रापेक्षयाऽतीवावश्यकं प्रतिभाति । यतो हि सर्वेषां वेदवेदाङ्गोपनिषद्-षड्दर्शनपुराणेतिहासादीनामयमेव सिद्धान्तः, यत् यज्ञतपोदानव्रतादिनियमैः लौकिकं वैदिकञ्च कर्म कर्त्तव्यम् । परञ्चोपयुक्तकाले कृतमेव यत्किमपि कर्म साफल्यमकाले च कृतं कर्म वैफल्यं परिणमतीति सामान्यो नियमः ।

ज्योतिः शास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं
तत्कात्स्न्योंपनयस्य नाम मुनिभिः संकीर्त्यते संहिता ।
स्कन्धेऽस्मिन् गणितेन या ग्रहगतिः तन्त्राभिधानस्त्वसौ
होराऽन्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ।।[2]

---

१. सिद्धान्तशिरोमणिः १।३ ।

२. वृहत्संहिता १।९ ।

ज्यौतिषशास्त्रस्य त्रयः स्कन्धाः भवन्ति यथा—

संहिता, होरा तन्त्रश्च, सिद्धान्तः, संहिता होरा वेति।

**सिद्धान्तस्कन्धे**

त्रुट्यादिप्रलयान्तकालकलना मानप्रभेदः क्रमात्
चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः।
भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते
सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः॥[1]

इत्येते विषयाः सन्ति विवेचिताः।

**होरास्कन्धे**

विविधजातक-ताजिक-प्रश्न-मुहुर्त्त-प्रभृतिविषयाः विवेच्यतां यान्ति।

**संहितास्कन्धे**

स्थलगगनजातविविधप्राकृतिकलक्षण-फलादेशविषयाः समालोच्यन्ते।

यद्यपीयं मेघमाला रुद्रयामलतन्त्रादुद्धृतैति ग्रन्थ एव निर्दिष्टं विद्यते परञ्चात्र वर्णिताः ज्यौतिषशास्त्रीयाः विषयाः संहितास्कन्ध-सम्बद्धा एव सन्ति। अस्य शास्त्रस्य त्रयाणां स्कन्धानामपि प्रायः सर्वेषां प्राणिनां कृते महन्महत्त्वं वरीवर्ति, परञ्च संहितास्कन्धस्य तु सामान्यजनैः सह विदुषां, राजनेतॄणां, कृषकाणां वणिजाञ्च कृतेऽतीव व्यावहारिकं महत्त्वं वर्तते। यतोहि शास्त्रमिदं सुभिक्ष-दुर्भिक्ष-समर्घ-महर्घातिवृष्ट्यना-वृष्टि-राजशान्ति-विग्रह-भूकम्पोल्कापातप्रभृतीन् विषयान् वर्षेभ्यः पूर्वमेव सूचयति। एतद्धि ईश्वरकृतायामेव सृष्टिरुपायां प्रयोगशालायां सर्वसुग-मैरुपकरणैरागन्तुकवर्षीयाणां ग्रहनक्षत्रादीनां सुस्पष्टप्रतिपत्तिं विधाय, तदुदयास्त-स्थिति-युति-संक्रान्ति-प्रभृतीनवगत्य, तिथिदिननक्षत्रयोगादीन् विज्ञाय, शुभाशुभस्य सामान्यं ज्ञानं वर्षेभ्यः प्रागेव संसूचयतीति शास्त्र-स्यास्य वैशिष्ट्यम्।

---

१. सि० शि० मध्य० कालमाना० श्लो० ६।

वर्षविशेषस्य सूक्ष्मातिसूक्ष्मफलज्ञानमपि तदव्यवहितपूर्ववर्षस्य कार्तिकादिमासेषु वायुगतेरध्ययनमाकाशीयपिण्डानां लक्षणानाञ्च पर्य-वेक्षणं, वृष्टिगर्भाणां स्थितिं, गोचरीय-ग्रहस्थितिञ्च ज्ञात्वा वर्षारम्भात् 'पूर्वमेव कर्त्तुं' शक्यते ।

ग्रन्थेऽस्मिन्नेकादशाध्यायाः वर्तन्ते, तत्र—

**प्रथमाध्याये** मेघानां वर्ण-रुप-गर्जनादीनां वर्णनं, तेषां स्थानानि, तत्संख्याः, सुबुधादिद्वादशमेघानां वर्णनं, मेषादिद्वादशराशिषु गुरोः फल-मिति विषयाः वर्णिताः ।

**द्वितीयाध्याये**—प्रभवादिषष्टिसम्वत्सराणां नामानि तत्फलानि च वर्णितानि ।

**तृतीयाध्याये**—सूर्यादिसम्वत्सराधिपति—मन्त्रि—धान्येश-मेघेश—रसेश-सस्येश-प्रभृतीनां फलानि निगदितानि ।

**चतुर्थाध्याये**—मेषाषिद्वादशराशिगतशनिफलम्, अश्विन्यादिसप्त-विंशतिनक्षत्रगतशनिफलम्, अश्विन्यादिनक्षत्राणां प्रत्येकचरणगतशनि-फलञ्च प्रतिपादितानि ।

**पञ्चमाध्याये**—मेषादिद्वादशराशिषु विभिन्नानां ग्रहाणां युतिफलं वर्णितम् ।

**षष्ठाध्याये**—रविचन्द्रसंयोगसंक्रान्तिफलवर्णनं, वारगतसंक्रान्ति फल-वर्णनं, ग्रन्थान्तरस्य संक्रान्तिविचारफलवर्णनं, संक्रान्तिजन्यवृष्टिफलवर्णनञ्च विहितम् ।

**सप्तमाध्याये**—चन्द्रोदयफलवर्णनं, शुक्रोदयास्तफलवर्णनं शनेरस्त-फलवर्णनञ्च विद्यते ।

**अष्टमाध्याये**—मासस्वरुपवृष्टिलक्षणवर्णनं, ग्रहस्थितिवशात्कार्ति-कादिद्वादशमासानां फलञ्च प्रतिपादितम् ।

**नवमाध्याये**—मेघविद्युद्वातलक्षणं तत्फलञ्च प्रतिपादितम् । अष्टम-

नवमाध्याययोर्मध्ये **प्रक्षिप्तपाठे** वृष्टिज्ञानविषयकं सर्पाकारसप्तनाडीचक्रं निरुपितं वर्तते ।

**दशमाध्याये**—मेघाह्वानविधिः, तन्मन्त्राः पूजाविधयश्च सङ्कलिताः विद्यन्ते ।

**एकादशाध्याये**—काकलक्षणं, वृक्षस्य शाखायां तद्वासफलञ्च प्रतिपादितम् । एकादशाध्यायस्यान्ते **प्रक्षिप्तरूपेण** केतूदयफलं वर्णितम् ।

अस्य ग्रन्थस्य चतुर्दशमातृकाः प्राप्ताः । तासु चतस्रः गङ्गानाथझा के० सं० विद्यापीठस्य मातृकागारे, एका इतिहास-संशोधकमण्डल-पूनानगरे, नवमातृकाश्च सरस्वती भवन पुस्तकालये, वाराणस्यां विद्यन्ते । सर्वासामपि मातृकाणां चत्वारो विभागाः कृताः । यथा—

**'अ'** मातृका—

१. Accession No. १०५८ (गङ्गानाथ झा के० सं० विद्यापीठस्य) पृ० सं० ७५ ।

२. Acc. No. ३५३२८ (सरस्वतीभवनपुस्तकालयस्य) पत्र सं० ४५ ।

३. Acc. No. ३४५४५ (सरस्वतीभवनपुस्तकालयस्य) पत्र सं० ५३ ।

**'a'** मातृका—

१. Acc. No. ८६०८ (गङ्गानाथ झा के० सं० विद्यापीठस्य) पत्र सं० ४९, प्रतिलिपिसमयः सं० १८७५, श्रावणकृष्णदशमी सोमवासरः, प्रतिलिपिकारश्च श्रीभीमरामशर्मा ।

२. Acc. No. ३४५४४ (स० भ० पु०) पत्र सं० ३१, अपूर्णा ।

३. Acc. No. ३५७२८ (स० भ० पु०) पत्र सं० २०, अपूर्णा ।

४. Acc. No. ३६७१२ (स० भ० पु ) पत्र सं० ९, अपूर्णा ।

'स' मातृका—

१. Acc. No. ३००१३ (गङ्गानाथ झा के० सं० वि०) पत्र सं० ४५। प्रतिलिपिसमयः–स०१९३३, पौषकृष्णषष्ठी गुरुवासरः।

२. Acc. No. ३७३३४ (स० भ० पु०) पत्र सं० ५७।

प्रतिलिपिसमयः—सं० १९३१, आश्विनशुक्लषष्ठी शुक्रवासरः।

३. Acc. No. व ४७।१७७ अ (इति० सं० मण्ड० पूना) पत्र सं० ४१।

'थ' मातृका—

१. Acc. No. ३६६८५ (गङ्गानाथ झा के० सं० वि०) पत्र सं० ५३।

१. Acc. No. ३६६८५ (गङ्गानाथ झा के० सं० वि०) पत्र सं० ५३।

प्रतिलिपिसमयः सं० १८८८ श्रावणकृष्णचतुर्दशी बुधवासरः,

प्रतिलिपिस्थानम्-धर्मशला।

प्रतिलिपिकारः-श्रीगोपालद्विवेदी।

२. Acc. No. ३५१९८ (स० भ० पु०), पत्र सं० ४४।

३. Acc. No. ३७२०२ (स० भ० पु०) पत्र सं० ५१।

प्रतिलिपिसमयः सं० १९१६, शक सं० १७८१, ज्ये० शु० पञ्चदशी बुधवासरः।

प्रतिलिपिकारः–श्रीरङ्गनाथस्यात्मजो गणनाथः।

४. Acc. No. ३६७१३ (स० भ० पु०) पत्र सं० २४, अपूर्णा।

पाठभेदावसरे सर्वाः मातृकाः समीचीनतयाऽपाठिष्म। **थ** मातृकासमूहस्य पाठः सर्वतोऽधिकः शुद्धः। यद्यपि **स** मातृका अभिलेखाव-

लोकनात् प्राचीनतमा प्रतिभाति तथापि पाठानां शुद्धिदृष्ट्या घ मातृका-समूह एव मूलमातृकायाः सामीप्यं भजत इत्यनुभूयते ।

मातृकाया अध्ययनादिदमवगम्यते यदस्य ग्रन्थस्य प्रयोगः विशेषतया सामान्यैः जनैरेवाक्रियत । यतः वहुत्र असाधुशब्दानां प्रयोगोऽपि दृश्यते, शब्दानां लेखनेऽतिसंस्कृतीकरण दृष्टेः प्रभावोऽपि विद्यते । यथा-- यदि प्रथमचरणे दुर्भिक्षमिति शब्दः समायाति तदा द्वितीयचरणे सुभिक्ष-मित्यस्य स्थाने सुर्भिक्षमिति पाठः प्रायोवलोक्यते । एतादृशः पाठः वहुत्रोपलभ्यते ।

अत्रत्याः केचनश्लोकाः मकरन्दप्रकाशेन सह प्रायः साम्यं भजते, यथा—मेघमालायां—

[1]सुभिक्षं क्षेममारोग्यं वर्षाकालं सुशोभनम् ।
शस्यवृद्धिः प्रजायेत श्रीमुखे सुरवन्दिते ।।

अथ च मकरन्दप्रकाशे—

[2]सुभिक्षं क्षेममारोग्यं वर्षाकालः शुभो भवेत् ।
वृद्धिश्च सर्वशस्यानां श्रीमुखे च वरानने ।।

एवं वहुत्र प्राप्यते ।

सूर्यसिद्धान्तादिविभिन्नेषु ग्रन्थेषु सम्वत्सरानयनप्रकरणे—

[3]द्वादशघ्ना गुरोर्याता भगणा वर्त्तमानकैः ।
राशिभिः सहिताः शुद्धाः षष्ठ्या स्युर्विजयादयः ।।

परन्तु मेघ[4]मालायां मकरन्दप्रकाशवत् प्रभवादिक्रमेण सम्वत्सराणां

---

१. मेघमालायां अध्याय २, श्लोक १८ ।

२. मकरन्दप्रकाशे सम्वत्सरफलप्रकरणे श्लोक सं० ७८ ।

३. सू० सि० मध्य० श्लो० सं० ५५ ।

४. मेघमालायां अध्याय २ श्लो सं० ६–११ ।

फलानि निगदितानि । मकरन्द[३]प्रकाशस्य कालः शकः १४०० वर्तते । तत्तुल्य एवास्य ग्रन्थस्य कालोऽपि स्यादित्यनुमीयते । एवं विधस्य ग्रन्थस्येदमपि वैशिष्ट्यं दृश्यते यद् विषयवस्तुनः प्रतिपादनं स्त्रीपुरुषयोः सम्वादरुपे क्रियते । ग्रन्थेऽस्मिन् शङ्करः पार्वतीं प्रति भविष्यस्य फलं कथयति । मिथिलायां डाकवचनामृते "कहे डाक सुनु डाकिनी", उत्कल-वंगादिक्षेत्रे खनारवचननामके ग्रन्थेऽपि कश्चित् पुरुषविशेषः स्वकीयां स्त्रीं निःशेषं फलं ब्रवीति । हिन्दीप्रदेशेषु प्रचलितघाघभड्डरीति नामके ग्रन्थेऽपि घाघः सर्वमपि वृत्तं भड्डरीं प्रति वदति । कथञ्चिद् "भड्डरी" अपि घाघं प्रति कथयति । कन्नडभाषायां तिरिक्कुरलग्रन्थः, रत्तमतशास्त्रसु इत्यनयोः ग्रन्थयोः, तमिलभाषायां 'करनपथु" ग्रन्थे, नेपालीभाषायाः वारि-शास्त्रग्रन्थेऽपि एवमेव प्रतिपादनमवलोक्यते । वस्तुतोऽयं घाघ एव डाकः 'भड्डरी" एव खना, यत उत्कले खनार बचन नामके ग्रन्थे डाकः खनां प्रति फलं कथयति । डाकवचनामृतमिति विषयेऽपि इयमेव धारणा वर्तते यतस्तत्र "कहे डाक सुनु भड्डरी वा" "कहे डाक सुनु डाकनो" लोकभाषायां इत्युक्तिः दृश्यते । घाघ-भड्डरी नामकग्रन्थेऽपि ग्रामे पाठान्तरं विद्यते । क्वचित् "कहे डाक सुनु भड्डरी, क्वचित् कहे घाघ सुनु घाघिनी क्वचिच्च "कहे घाघ सुनु भड्डरी" इति प्रचलति । फलादेशस्य भाषा तु पृथक्-पृथक् अवश्यमेव वर्तते परन्तु विषयप्रतिपादने सर्वत्र साम्यमेवास्ति ।

"घाघभड्डरी, खनार वचन, डाकवचनामृत" तिरिक्कुरल, रत्तमतशास्त्रसु, करनपथु, वारिशास्त्रञ्चेत्येतेषु एकस्यापि भाषा सुसंस्कृता परिशुद्धा च न वर्तते । घाघभड्डरीति ग्रन्थस्य भाषा हिन्दी प्रदेशस्य ग्रामेषु या प्रचलति सैव वर्तत । डाकवचनामृतेऽपि मैथिलीभाषायाः विकृतं स्वरुपं, तथैव खनारवचन-नामकग्रन्थस्योत्कलभाषायाः विकृतं रुपम् । मेघमालायाः अपि तादृश्येव स्थितिरस्ति । अस्याः अपि भाषा अति सरला, कुत्रचिद्व्याकरणदृष्ट्याऽशुद्धापि ।

मेघमालामयूरचित्रक-वनमाला-इत्यादिग्रन्थेषु ये विषयाः वर्णिताः ते सर्वेऽपि घाघभड्डरी प्रभृति ग्रन्थैः सह साम्यं भजन्ते ।

---

३. गणकतरङ्गिणी पृ० ४८ ।

यथा—

[1]घाघ भड्डरोक्तिः

असाढ़ मास पूनो के गौना । धुजा बाँध के देखौ पौना ।।
जो पै पवन पूरब से आवै । उपजै अन्न मेघ झरि लावै ।।
अगिन कोन जो बहै समीरा । पड़े काल दुःख सहे सरीरा ।।

दखिन बहै जल थल अलमोरा । ताहि समै जूझै बड़ बीरा ।।
तीरथ कोन बून्द नहि परै । राजा परजा भूख न मरै ।।

पश्चिम बहै नीक करि जानों । परै तुसार तेज डर मानो ।।
बायब बह जलथल अति भारी । मूस उगाह दण्ड बस नारी ।।
उत्तर उपजै बहुधन धान । खेत बात सुख करै किसान ।।
कोन इसान दुन्दुभी बाजै । दही भात भोजन सव गाजै ।।

आसाढ़ी पूनों को साँझ । पुनः वायु देखिए नभ के माझ ।।
नैऋत भई बूंद ना परै । राजा परजा भूख न मरै ।।

[2]जो कहुँ हवा अकासै जाय । परै न बून्द काल परि जाय ।।
दक्खिन पश्चिम आधा समै । भड्डर जोसी ऐसे भनै ।।

एवमेव [3]मयूरचित्रकेऽपि

आषाढ़मासस्य च पौर्णमास्यां
सूर्यास्तकाले यदि वाति वायुः ।
पूर्वस्तदा सस्ययुता च मेदिनी
नन्दन्ति लोका जलदायिनो घनाः ।।

---

१ घाघभड्डरी पृ० १५ सम्पा० देवनारायण द्विवेदी, प्रका० डायमण्ड पाकेट बुक्स ।
२. घाघभड्डरी पृ० १६ सम्पा० देवनारायण द्विवेदी, प्रका० डायमण्ड पाकेट बुक्स ।
३. श्लोक सं० ७७-८३, मातृका संख्या—३४३३२, स० भ० पु० ।

कृशानुवायौ मरणं प्रजानाम्
अन्नस्य नाशः खलु वृष्टिनाशः ।

याम्ये मही सस्य विवर्जिता स्यात्
ततः परं यान्ति नृपा विनाशम् ॥

नैशाचरो वाति यदाऽत्र वातो
न वारिदो यच्छति वारि भूरि ॥

तदा मही सस्य विवर्जिता स्यात्
क्रन्दन्ति लोकाः क्षुधया प्रपीडिताः ॥

आषाढमासे यदि पौर्णमास्यां
सूर्यास्तकाले यदि वारुणोऽनिलः ।

प्रवाति नित्यं सुखिनः प्रजाः स्युः
जलान्नयुक्ता वसुधा तदा स्यात् ॥

वायव्यवाते जलदागमः स्यात्
अन्नस्य नाशः पवनोद्घता च ।

सौम्येऽनिले धान्यजलाकुलाधरा
नन्दन्ति लोका भयदुःखवर्जिताः ॥

ऐशेन बृद्धिर्बहुवारिपूरिता
धरा च गावो बहुदुग्धसंयुताः ॥

भवन्तिवृक्षाः फलपुष्पदायिनो
वातेऽभिनन्दन्ति नृपाः परस्परम् ॥

मेघ[1]मालायाम्

आषाढीपूर्णिमायां तु पूर्ववातो यदा भवेत ।
निष्पत्तिः सर्वधान्यानामारोग्यञ्च भविष्यति ॥

---

१. मेघमाला अध्याय—८

आषाढीमग्निवातंचेदस्थिशेषा मही तदा ।
आषाढीपूर्णिमायां तु दक्षिणो यदि मारुतः ।।

सकूपेषु तड़ागेषु तथा निर्झरणेषु च ।
तदा न दृश्यते तोयं देवि देवो न वर्षति ।।

आषाढीपूर्णिमायां तु नैर्ऋत्यां यदि मारुतः ।
विक्रयित्वा तदा सर्वं कर्त्तव्यो धान्यसंग्रहः ।।

मासे तु पञ्चमे देवि लाभस्तु द्विगुणो भवेत् ।
आषाढीपूर्णिमायां तु पश्चिमो यदि मारुतः ।।

निष्पत्तिः सर्वधान्यानां लोके वर्षति माधवः ।
आषाढीपूर्णिमायां तु वायव्यो यदि मारुतः ।।

नकुलाः शलभाश्चैव मूषकाश्च पतन्ति वा ।
धर्मशीलास्तदा लोका धनं धान्यं गृहे गृहे ।।

आषाढीपूर्णिमायां तु उत्तरो यदि मारुतः ।
गीतवाद्यरतालोकाः सुभिक्षं प्रबलं भवेत् ।।

आषाढीपूर्णिमायां तु चतुर्दिक्षु च मारुतः ।
धान्यानि च महर्घानि वह्निदाहः प्रकीर्तितः ।।

आषाढी त्वधिका तस्य समर्घं तु तदा मतम् ।
सम्वत्सरो वर्तमानः शून्यो यातः सुनिष्फलः ।।

निर्वातगगना देवि यदाषाढस्य पूर्णिमा ।
तदा तु सर्वमेदिन्यां जलं नास्तीति कथ्यते ।।

पूर्णिमाहर्निशं देवि इन्द्रचिह्नं प्रदृश्यते ।
अस्तं गच्छति तीक्ष्णांशुः शस्यस्योत्पत्तिरुत्तमा ।।

वन[1]मालायामपि

---

१. वनमाला—स० भ० पु० मातृका सं० ३५३९५, पृ० सं० १—२ श्लोक १२—१९ ।

शुचिवलक्षदलान्ततमीमुखे
यदिवहत्यनिलो हरि दिग्भवः ।
जलमलं सृजति क्षितिमण्डले
बहु मुदं बहुधा वसुधामृतः ॥
अनलकोणभवो यदि मारुतो
वहति मन्दजवो रजनीमुखे ॥
वहति भस्मकृशानुशिखाकुला
वदनतः परितोऽपि वसुन्धरा ॥

खना[१]र वचन नामके ग्रन्थे

पूर्ण्ण आषाढ़े दक्षिण वहे । सेही वरष टि वन्या हुए ॥

आदि......................

यथामतिरस्य ग्रन्थस्य पाठान्तरमकार्षम्। यत्र कृते पाठान्तरेऽपि अर्थसंगतिः नाभूत्तत्र पादटिप्पण्यां कोष्ठके यथामति स्वनिर्मितं पाठमस्थाम्। यत्र तदपि कर्त्तुं नार्हिषं तत्र (?) इति प्रश्न चिन्हमुपस्थाम्। यत्र सर्वासु मातृकासु अशुद्ध एव पाठः परञ्च तुल्यैवाशुद्धिस्तत्र स्वनिर्मितं पाठं नैवास्थाम् यथा एकादशाध्याये पृ० सं० १२६, वहुत्र "वायसः" इतिस्थाने वायसं इति पाठः। यतः सर्वासु मातृकासु "वायसं" कुरुते गृहमेव पाठ उपलभ्यतेऽतः ग्रन्थकारस्यैवायं पाठ इति धिया कोष्ठके शुद्धः पाठः "वायसः" इति न कृतः। तथैव तत्रैव श्लो० सं० ७ चतुर्थे पादे क्रियते गृहमुत्तमम् इति वर्तते। यतः सर्वासु मातृकासु अयमेव पाठः वर्ततेऽतः "कुरुते" इति कोष्ठकेऽपि न कृतः।

सम्पूर्णेऽपि ग्रन्थे भाववोधो जायते, यथा "घाघ भड्डरी" इति

---

१. खनारवचन—सं० श्रीश्यामसुन्दर नायक, पृ० २५, पद्य सं० १३।

ग्रन्थे हिन्दीव्याकरणदृष्ट्या अशुद्धिरवलोक्यते परञ्च तथापि भावाभिव्यक्ति र्भवत्येव, तथैवात्र मेघमालायामपि ।

यतोऽयं ग्रन्थः सामान्यजनानामसंस्कृतज्ञानां कृतेऽपि महत्त्वमवधारयति अतः श्रीमन्माननीयप्राचार्यमहोदयानां विशेषनिर्देशेन हिन्दीभाषानुवादोऽपि विहितो योऽस्यान्तिमे भागे वर्तते । ग्रन्थेऽस्मिन् वर्णितानां महत्त्वपूर्णविषयाणां अन्यैः ग्रन्थैः सह तुलनात्मकमध्ययनं विशेषव्याख्यानञ्च परिशिष्ट-रुपेणालेखिषम् ।

## कृतज्ञताज्ञापनम्

सर्वप्रथमं सनातनधर्मप्रतिमूर्त्तिभ्यः प० श्रीदिवाकरमिश्रमहोदयेभ्यः (बलुआबाजार सहरसा) कृतज्ञतां समर्पयामि येषां कृपा प्रसादादद्य मनुष्योऽहम् । जन्मकोटिशतैरपि तेषामृणमपाकर्त्तुं न क्षमः ।

एतद्ग्रन्थसम्पादनक्रमेऽत्रत्याः विद्वन्मूर्धन्याः देशविदेशेषु ख्यातिप्राप्ताः विभिन्नेषु शास्त्रेषु कृतभूरिप्ररिश्रमाः पौरस्त्य-पाश्चात्यालोचना पद्धतिभ्यां विवेचने निष्णाताः प्राचार्याः डा० गयाचरणत्रिपाठिमहाभागाः सततं मार्गनिर्देशनमकार्षुः ।

एभिर्लिखितान् शोधनिवन्धान् यथासमयमधिगत्य सम्पादनविषयकं निखिलं ज्ञानमाप्नवम् । घाघभड्डरीति नामकं प्राचीनं पुस्तकं समनुगृह्य तुलनात्मिकां टिप्पणीं च प्रदातुं परामृष्टवन्तः । येनास्मिन् कर्मणि साफल्यमध्यगच्छम् । अतस्तेभ्यो हार्दं कार्त्तज्ञमनुभजन् सादरं प्रणामं समर्पयामि ।

अत्रत्याः वरिष्ठप्रवाचकाः महान्तो विद्वांसः व्याकरण-तन्त्र विविधदर्शनादिशास्त्रेषु कृतभूरिपरिश्रमाः शोधकार्यनिष्णाताः डा० किशोरनाथ झा महानुभावाः प्रतिपदं स्वकीयानुभवैः मार्गं प्राद्राक्षुस्तदर्थं हार्दिकीं कृतज्ञतां प्रणामञ्च विनिवेदयामि ।

स० भ० पुस्तकालयस्य भातृकाभिः पाठान्तरावसरे तत्रत्याः

प्रवाचकाः पू० गुरवः प० श्री उमाशंकरशुक्लमहोदयाः स्वकीयममूल्यं समयं प्रदाय वनमालाप्रभृतिपुस्तकान् द्रष्टुं निर्देशञ्च विधाय मामनुगृहीतवन्त स्तदर्थं तान् प्रति सप्रणामं कार्त्तज्ञं वहामि ।

मातृकासंग्रहावसरेऽत्रत्याः मातृकाध्यक्षाः श्रीजीवेश्वरझा महोदयाः तद्विभागीयाः सहयोगिनश्च साहाय्यमाचरितवन्त एतदर्थं तेभ्यः कृतज्ञतां ज्ञापयामि ।

राष्ट्रियसंस्कृतसंस्थानस्य निदेशकाः श्रीप्रियदर्शीठाकुरमहोदयाः तत्रत्याः अधिकारिणः कर्मचारिणश्च धन्यवादार्हाः यतस्तै वित्तप्रदाने-नास्माननुगृहीतवन्तः । अत्रत्याः विद्यापीठीयाःसकलसन्मित्राणि धन्य-वादार्हाः येषां शुभकामनाभिः कार्यमिदं पूर्णतां याति ।

यथासमयं ग्रन्थरत्नमिदं मुद्रापितवद्भ्यः शाकुन्तलमुद्रणालयस्य श्री उपेन्द्रत्रिपाठिमहाशयेभ्यः धन्यवादान् समर्पयामि ।

पुरुषगतभ्रमप्रमाज्ञानादिमलजन्यः ग्रन्थगतास्त्रुटयः सहृदयैर्ज्ञानाढ्यैः सोढव्याः इति विनिवेदयन् विरमति—

विद्वच्चरणचञ्चरीकः
**सर्वनारायणः**



# विषय-सूची

## भावानुवादः





# मेघमाला

—●—

॥ श्रीगणेशाय नमः ॥

## प्रथमोऽध्यायः

कैलासशिखरासीनं भैरवं परमेश्वरम् ।
गणकोटिसमाकीर्ण - मप्सरोगण[1]किन्नरैः ॥१॥

सिद्धगन्धर्व[2]कैश्चैव विद्याधरसुसंयुतैः ।
मालाधरैस्तथा यक्षैः महोग्रैश्चैव संयुतैः ॥२॥

अर्धाङ्गे ललिता देवी वामभागेन संस्थिता ।
ललाटे चन्द्रमा चैव वासुकिः कण्ठमाश्रितः ॥३॥

त्रिनेत्रः पञ्चवक्त्रश्च दशबाहुविभूषितः ।
प्रणम्य तं सुराः सर्वे सिद्धगन्धर्वकिन्नरैः ॥४॥

तं दृष्ट्वा[3] शंभवो[4] [शांभवी] देवी पार्वती परिपृच्छति ।
ॐ नमो वरदेवाय देवाधिपतये नमः ॥५॥

---

१. 'गण' ध, अन्यत्र 'हित' ।
२. 'गन्धर्वभिः' ध 'गन्धर्वकाः' स, अन्यत्र गन्धर्वकैः ।
३. 'दृष्ट्वा' व अन्यत्र दृष्टवान् ।
४. [शांभवी] ।

पार्वत्युवाच

देवाधिदेवताश[1]चैव अनादिपरमेश्वर ! ।
विख्याता[2]स्त्रिषु लोकेषु सृष्टिसंहारकारक[3] ! ॥६॥

मेघस्तु कीदृशं देव ! कथं विद्युत्प्रजायते ।
कीदृशं वर्णरूपं तु शरीरं तस्य कीदृशम् ॥७॥

ईश्वर उवाच

श्रुणु देवि ! परं गुह्यं मेघमाला यथाक्रमम् ।
द्वादशानां सहस्रेषु उद्धृतं च धृतं[4] [कृतं] मया ॥८॥

मेघवर्णः [मेघवर्णं] प्रवक्ष्यामि सर्वशास्त्रसमुच्चयम् ।
चतुर्वर्णानि मेघानि विशेषेणा[5]धुना श्रृणु ॥९॥

पूर्वाह्ने जायते विप्रो मध्याह्ने क्षत्रियस्तथा ।
अपराह्ने तथा वैश्यश्शूद्रश्चास्तमिते रवौ ॥१०॥

मेघश्चाण्डालरूपेण वर्षतेऽपि च गोचरे ।
ब्राह्मणः श्वेतवर्णश्च क्षत्रियोऽरुणवर्णकः ॥११॥

पीतवर्णो भवेद्वैश्यश्शूद्र कृष्ण उदाहृतः ।
मेघश्च सर्ववर्णानां विप्रश्चाण्डाल उच्यते ॥१२॥

मधुरं गर्जते विप्र क्षत्रियः गुमगुमायते ।
वैश्यश्च गर्जते घोरं शूद्रष्ठमठमायते ॥१३॥

---

१. 'देवताश्चैव' ध अन्यत्र देवता चैव ।
२. 'विख्याताः' ध अन्यत्र 'विख्यातः' ।
३. 'कारक' व अन्यत्र कारकः ।
४. [कृतं] ।
५. 'विशेषेण' ध अन्यत्र 'विशेषानि' ।

इदं तु कथितं देवि यादृशं मेघलक्षणम् ।
कार्तिके शुक्लनन्दायां पञ्चरूपाणि यो[1]भवेत् ।।१४।।

अभ्राणि श्वेतवर्णानि रक्तवर्णानि यो भवेत् ।
पीतवर्णानि मेघानि कृष्णवर्णानि यो भवेत् ।।१५।।

कांस्यवर्णो भवेद्यस्तु ताम्रवर्णस्तथा भवेत् ।
पञ्चवर्णास्तु विज्ञेया दिव्यगर्भेषु संभवाः ।।१६।।

प्रतिपदादिभिः योगः[2] कलापञ्चदशस्तथा ।
षोडशीति कला चैव अमावास्या प्रकीर्तिता ।।१७।।

गर्जितं कार्तिके मासे मासचत्वारि वर्षति ।
कार्तिके मासि मेघस्य पुष्पाणां संभवो भवेत् ।।१८।।

सुभिक्षं तु भवेत्तत्र कार्तिके मेघमुत्तमम् ।

पार्वत्युवाच

मेघस्य वर्णरूपं च यादृशं तत्[3] श्रुतं मया ।।१९।।

मेघस्य गर्जनं[4] किञ्च[5] येन मे प्रत्ययो भवेत् ।

ईश्वर उवाच

श्रृणु देवि यथा दिव्यं गर्भरुपं[6] तु यादृशम् ।।२०।।

---

१. 'योजययेत्' ख अन्यत्र 'यो भवेत्' ।
२. 'पित्वा' ध अन्यत्र 'योगः' ।
३. 'तत्' ध अन्यत्र तु ।
४. 'गर्जनं' ध अन्यत्र 'गर्जितं' ।
५. 'किञ्च' ध, व अन्यत्र 'किञ्चित्' ।
६. 'रुपं तु' ध अन्यत्र ० 'ऋतुयन्तु' ।

मन्दरस्योत्तरे मेघा दशराजा प्रकीर्तिता ।
कैलासे दशमेघाश्च विकटे च तथा दशः ॥२१॥

जठरे दशराजा च मेरु श्रृङ्गे तथा दशः ।
पारिजाते दशश्चैव हिमवन्ते दशस्तथा ॥२२॥

गन्धमादन[1] मे राजा दशमेघः स उच्यते ।
असंख्यमेघा विख्याता कथितास्तव सुन्दरि ॥२३॥

रूपं तु दर्शानाद्देवि येन शान्तिः प्रजायते ।
मर्त्यलोकेषु ये मेघास्ते मेघा हानिदा ध्रुवम् ॥२४॥

ध्यानं च कृत शुद्धं च आह्वानाय पुरस्तथा ।
प्रणामं[2] च तमेशं भुस्तुतिः कुर्वन्ति तादृशम् ॥२५॥

स्तुवन्ति विविधैस्तोत्रैर्दिव्याभरणभूषितैः ।

**मेघ उवाच**

किमर्थं स्मर्यते देव आदेशं दीयतां प्रभो ॥२६॥

**ईश्वर उवाच**

स्वरुपवर्णंश्नं चैव पार्वती परिपृच्छति ।
गन्तव्यं मर्त्यलोकेषु उपकारकरो भव ॥२७॥

सुभिक्षं जायते येन चातुर्मासस्य वर्षणात् ।

**मेघ उवाच**

विख्यातं दशराजा च परिचारो दशकोटयः ॥२८॥

---

१. 'गन्धमादन' **a** अन्यत्र गन्धमर्दन ।
२. [प्रणमन्ति च मां शंभुं स्तुतिं] ।
२, 'वर्णनं' **b** अन्यत्र 'दर्शनं' ।

एकविंशतिभूर्वाणब्रह्माण्डं चैव संस्थितः ।
क्रमेण सप्तद्वीपानां मेघानां च सुराधिपः ॥२९॥

कथितं च महादेवि नीलेन परिपृच्छति ।
विसर्जिता गता मेघा पार्वती परिपृच्छति ॥३०॥

को राजा च भवेद्देव पटबन्धं च कीदृशम् ।

ईश्वर उवाच

श्रृणु देवि परं गुह्यं मेघसद्भावमुत्तमम्[१] ॥३१॥

मासद्वादशविख्यातं प्रत्ययं येन जायते ।
सु[२]बुघ्यो१ नन्दशाली२ च कन्यदश्च३ पृथुश्रवा४ ॥३२॥

वासुकि५ स्तक्षकश्चैव६ विकर्त्तनोऽथ७ सा[३]र्बुदः ।
हेममाली९ जलेन्द्रश्च१० वज्रदंष्ट्र ११ विष[४]प्रभुः ॥३३॥

एते द्वादशमेघाश्च कथितास्तव सुन्दरि ।

## [ मेषराशिगतगुरुफलम् ]

चैत्रादिमाससंयुक्तो यत्र राशौ[५] गुरुस्तथा ॥३४॥

यदा मेषे गुरुश्चैव सुबुधो मेघ उच्यते ।
चैत्र संवत्सरो नामा स राजा पद[६] उच्यते ॥३५॥

---

१. 'सद्भाव' *ध*, *व* अन्यत्र सम्हाव ।
२. [सुबुधो] ।
३. 'सार्वंदाः' *ध*, 'सार्वदः' *स* [सार्बुदः], 'अन्यत्र 'सर्वदा' ।
४. 'प्रभुः' *ध*, अन्यत्र 'प्रभो' ।
५. 'यत्र गुरुस्तथा भवेत् । *अ*, 'यत्र राशौ गुरुस्तथा *व*, अन्यत्र यत्त यत्र गुरुस्तथा ।
६. 'पद' *ध*, अन्यत्र 'वद' ।

शुद्धे[1] संवत्सरे चैव सुवृष्टिः जायते सदा ।
क्षेमं सुभिक्षमारोग्यं राजानां शान्तिविग्रहः[2] ॥३६॥

शस्यानि च भविष्यन्ति सर्वधान्यवसुन्धरा ।
समर्घं चैव संयाति कर्प्पासं लवणं गुडम् ॥३७॥

संग्रहेत्पञ्चमासानि भवेल्लाभश्च पुष्कलः[3] ।

[ वृषराशिगतगुरुफलम् ]

वृषराशौ गुरुश्चैव नन्दशाली प्रकीर्तिता ॥३८॥

वैशाखसंवत्सरो नामा सोऽपि राजा च उच्यते ।
बहुक्षीरधृता गावो बहुशस्या च मेदिनी ॥३९॥

जायते च महावृष्टिः सुभिक्षं च न संशयः ।
अर्घे च त्रिविधो भावो जायते नात्र संशयः ॥४०॥

कर्पासं तिलगोधूमं शुण्ठी च लवणं गुडम् ।
मरिचं वस्त्रपुंगी च पटोलं[4] धातुकी तथा ॥४१॥

मसूरं माषकं चैव सिन्दूरं चणकादयः ।
दशमासं तु संग्राह्यं द्विगुणो लाभ उच्यते ॥४२॥

[ मिथुनराशिगतगुरुफलम् ]

गुरुर्मिथुनराशौ च कन्यदो मेघ उच्यते ।

ज्येष्ठसंवत्सरो नामा सोऽपि राजा विधीयते ॥४३॥

---

१. 'शुद्धे' *ध*, अन्यत्र 'सुहे' ।
२. 'विग्रहं' *ध* अन्यत्र 'विग्रहः' ।
३. 'पुष्कलः' *ध* अन्यत्र 'पुष्करः' ।
४. 'पटोलं' *व, स, ध*, अन्यत्र 'पटोस्य' ।

विचित्रवृष्टिं जानीयात् खण्ड[1]वृष्टिर्भविष्यति ।
मध्यमं जायते चार्घ्यं सुभिक्षं नात्र संशयः ॥४४॥

राजा विरोधमाप्नोति विग्रहश्चैव जायते ।
अर्घ्यं च दशमासेषु कर्पासं सतिलं गुडम् ॥४५॥

लवणं हिंगुः शुण्ठी च मरिचं वस्त्रपाटलः ।
यवसर्षपधान्यानि गोधूमाश्चणकादयः ॥४६॥

मसूरास्त्रिकुटासौरि मावफाल्गुनसंग्रहः ।
कर्पासतिलमुद्गादि विक्रयो मासकं द्वयम् ॥४७॥

चैत्रादिज्येष्ठपर्यन्तं गन्धधान्यादिसंग्रहः ।
विक्रयः[2] श्रावणे मासि लाभश्चैव प्रजायते ॥४८॥

## [ कर्कराशिगतगुरुफलम् ]

कर्कराशौ गुरुश्चैव यदा गच्छति पार्वति ।
पृथुश्रवा भवेन्मेघः सोऽपि राजा प्रजायते ॥४९॥

आषाढं[3] चैव नामानः भवेत्सम्वत्सरो यदा ।
अत्यन्तजलदा मेघा[4] धान्यानि च तदा बहु ॥५०॥

अर्घं समर्घतां याति राजा तत्र विरोधयेत् ।
राजभङ्गं विजानीयात् पापा भवति मेदिनी ॥५१॥

---

१. व 'हु ध अन्यत्र ब' ।
२. 'विक्रयः' ध अन्यत्र 'विक्रयेत्' ।
३. [आषाढ़संज्ञको नामा] ।
४. 'जलदा मेघा' व अन्यत्र 'जलमेघस्य' ।

तदा[1] वस्तु च सर्वाणि संग्रहं कारयेद्बुधः ।
लवणं तिलकर्पासं हिंगुशुण्ठिवचानि च ॥५२॥

मरिचं पद्मकं[2] चैव कुङ्कुमं दोलगन्धकम्[3] ।
पक्षे समर्घ्यतां याति सुभिक्षं पार्थिवे भवेत् ॥५३॥

[ सिंहराशिगतगुरुफलम् ]

सिंहराशौ सुराचार्ये वासुकी मेघ उच्यते ।
वत्सरं श्रावणं नाम सोऽपि[4] राजा[5] पदोच्यते[6] ॥५४॥

बहुक्षीरयुतागावो क्षेमं सर्वत्र जायते ।
धामन्यं सर्घ्यतां याति तस्मिन् काले न संशयः ॥५५॥

चतुष्पदानि[7] सर्वाणि संग्रहस्तत्र कारयेत् ।
वैशाखज्येष्ठयोर्मध्ये विक्रयः[8] निश्चयं बुधः ॥५६॥

लाभो द्विगुणितो ज्ञेयो नात्र कार्या विचारणा ।

[ कन्याराशिगतगुरुफलम् ]

कन्याराशौ सुराचार्ये तक्षको मेघ उच्यते ॥५७॥

---

१. [तदाहि सर्ववस्तूनां] ।
२. 'पद्मकं' स अन्यत्र 'यक्षमकं' ।
३. 'दोलगन्धकं' ध अन्यत्र 'चोलगेवकं' ।
४. 'सो' ध अन्यत्र 'सोऽपि' ।
५. 'राज्य' ध अन्यत्र 'राजा' ।
६. प्रजायते व अन्यत्र 'पदोच्यते' ।
७. [चतुष्पदानां सर्वेषां] ।
८. [विक्रयेत्] ।

भाद्रसम्वत्सरो ज्ञेयो[1] सोऽपि राजा भविष्यति[2] ।
सुभिक्षं जायते तत्र धर्म्म-कर्म्म प्रवर्तते ॥५८॥

प्रणम्य भैरवं देवं द्विजदेवं प्रणम्य च ।
वस्तूनां[3] संग्रहं[4] कार्यं चणको[5] यवयोदरी[6] ॥५९॥

कर्पास त्रिकुटा तूरी[7] माघफाल्गुन-धारयेत् ।
षण्मासं संग्रहः कार्यः विक्रयेत्तदनन्तरम् ॥६०॥

लाभो द्विगुणितो ज्ञेयो गोधूममधुशर्करा ।
कर्पासंपटसूत्राणि वस्तु[8] एतानि संग्रहः ॥६१॥

लाभो भवति द्रव्येषु नात्र कार्या विचारणा ।
काञ्चनं त्रपुमांजीष्ठं कुङ्कुमं शुण्ठिहिगुकम् ॥६२॥

मरिचं च जातीफलं कङ्कोलं[9] मगरं तथा ।

## [ तुलाराशिगतगुरुफलम् ]

तुलाराशौ यदा याति देवाचार्यो वरानने ॥६३॥

---

१. 'माम' ध अन्यत्र 'ज्ञेयो' ।
२. 'भविष्यति' ध अन्यत्र 'भवन्ति हि' ।
३. 'वस्तूनां' ध अन्यत्र 'वस्तूनि' ।
४. (संग्रहः कार्यः) ।
५. 'चणकोथ' ध अन्यत्र 'चणको' ।
६. 'यवयोदरी' ध अन्यत्र 'यवयोघरी' ।
७. 'तोरि' ध अन्यत्र 'तूरी' ।
८. (वस्तून्येतानि संग्रहेत्) ।
९. 'कङ्कोलं' ध व स अन्यत्र 'लङ्कोलं' ।

विकर्त्तानाम-मेघस्य आश्विनं वत्सरं भवेत् ।
त्वयापि सृष्टता[1] चिन्ता स राजा तेन उच्यते ॥६४॥

उद्गारयति[2] संभूतं द्वारव्याधि प्रवर्तते ।
सर्वधान्यसमर्घ्यं च सुभिक्षं जायते तदा ॥६५॥

आर्घ[3]न्यतुल्यभाण्डानि संग्रहं तत्र कारयेत् ।
कर्पासं गुडहिंगुश्च मरिचं शुण्ठिकुङ्कुमैः[4] ॥६६॥

जातीफलं च कर्पूरं पटसूत्रादयस्तथा ।
एतद्द्रव्याणि सर्वाणि चतुर्मासानि रक्षयेत् ॥६७॥

लाभश्च द्विगुणो ज्ञेयो व्यासस्य वचनं यथा ।

[ वृश्चिकराशिगतगुरुफलम् ]

वृश्चिकके तु गुरुश्चैव यदा गच्छति पार्वति ॥६८॥

सारम्बुदो[5] भवेन्मेघः पटवन्धं च कारयेत् ।
कार्तिकं[6] सम्वत्सरं[7] नाम सोऽपि राजा प्रजायते ॥६९॥

खण्डवृष्टिर्भवेन्मेघो दुर्भिक्षं जायते तदा ।
उद्गारं विषमं भुत्वा सर्पदंष्ट्रादि[8] संभवः ॥७०॥

---

१. 'शृण्वतां' ध 'मृष्टता' व अन्यत्र 'मृष्टता' ।
२. उद्गारजाति' ध अन्यत्र 'उद्गारयति' ।
३. 'अघ्यान्य' ध, 'अर्घान्य' व स, अन्यत्र 'आर्घन्य' ।
४. [कुङ्कुमम्] ।
५. 'सारम्बुहो' अ अन्यत्र 'सारम्बुदो' ।
६. 'उर्ज्जे संवत्सरो नाम' व अन्यत्र 'कार्तिकं सम्वत्सरं' ।
७. 'वत्सरं' ध अन्यत्र 'सम्वत्सरः' ।
८. 'दंष्ट्रादि' ध अन्यत्र 'दंष्ट्राश्च' ।

पापबुद्धिरता लोका:[1] भवन्ति[2] सर्वमेदिनीम् ।
न देवं पुजयेल्लोके राजा भवति तस्करः ॥७१॥

अर्घानि यानि वक्ष्यामि महिषी गो अजास्तथा ।
गोधूमा चणका मासा त्रिकुटातोरियोधरी ॥७२॥

संग्रहेत्पश्चमासानि श्रावणे मासि विक्रयेत्[3] ।
लाभो द्विगुणितो ज्ञेयो नात्र कार्या बिचारणा ॥७३॥

अपराणि[4] च द्रव्यानि ताम्रनागश्च[5] लोहकम् ।
हरिद्रावच कुष्ठं च द्राक्षा[6] चैव वलं तथा ॥७४॥

मासे तु चाष्टमे ज्ञेया त्रिगुणो लाभ जायते ।

## [ धनुराशिगतगुरुफलम् ]

धनुराशौ[7] सुराचार्ये यदा गच्छति पार्वति ॥७५॥

हेममालीय नामानो मेघस्तत्र प्रजायते ।
मार्गसम्वत्सरः सोऽपि पटबन्धं तु कारयेत् ॥७६॥

दिव्यवृष्टिर्भवेद्देवि सर्वधान्यानि जायते ।
अर्घानि च वस्तूनि वर्षाकाले महर्घता ॥७७॥

गुडं तैलं च लवणं तथा चैव चतुष्पदम् ।
संग्रहेत्सप्तमासानि त्रिगुणो लाभ उच्यते ॥७८॥

---

१. 'लोके' ध ।
२. [भ्रमन्ति] ।
३. 'विक्रयेत्' ध, व अन्यत्र विक्रयी ।
४. 'अपराणि' व, स अन्यत्र 'आपणानि' ।
५. 'ताम्राणां पञ्चलोहकं' अ अन्यत्र 'ताम्रनागश्च लोहकम्' ।
६. [द्राक्षैला च लवङ्गकम्] ।
७. 'धनुर्धरे' ध, व अन्यत्र 'धनुराशौ' ।

[ मकरराशिगतगुरुफलम् ]

मकरस्थे सुराचार्ये जलेन्द्रो मेघ उच्यते ।
पौषसम्वत्सरो नामा सोऽपि राजा वरानने ॥७९॥

चतुष्पदा:[१] विनश्यन्ति मृगनन्दा[२] च जायते ।
विग्रहं च महाघोरं राजयुद्धं परस्परम् ॥८०॥

खण्डवृष्टिर्भवेन्मेघो दुर्भिक्षं भवति तथा ।
पापकर्मरता लोका हाहाभूतं प्रचेतसा ॥८१॥

महर्घं च त्रयोमासा[३] पश्चात्सुभिक्षमादिशेत् ।
धान्यानां च महर्घानि करोति नात्र संशय: ॥८२॥

[ कुम्भराशिगतगुरुफलम् ]

सुराचार्यो कुम्भराशौ यदा गच्छति पार्वति ।
वज्रदंष्ट्रो भवेन्मेघ: पटबन्धस्य कारणम् ॥८३॥

माघसम्वत्सरो नामा तेषां राजा प्रकीर्तितम् ।
मेघा: स्यु: सवलास्तत्र नव[४]खण्डा च मेदिनी ॥८४॥

सुभिक्षं जायते सर्वं शस्यनिष्पतिमुत्तमम्[५] ।
देवाश्च ऋषयो विप्रा: पण्डिता: परिपूजिता: ॥८५॥

रंगघोरं च माञ्जिष्ठं लौहं चैव महर्घता ।
तस्मिन् काले भविष्यन्ति पण्डिता: गणकादय: ॥८६॥

---

१. 'प्रणश्यन्ति' *ध व*, अन्यत्र विनश्यन्ति ।
२. 'मृगानन्द:' *ध* अन्यत्र मृगनन्दा ।
३. [त्रीन् मासान्] ।
४. 'खण्डा' *ध*, अन्यत्र 'खण्डं' ।
५. [शस्यनिष्पत्तिरुत्तमा] ।

भोजने जीर्णमर्त्यस्य[1] याति[2] विष्ठं[3] विसूचिका ।
धान्यं च जायते सर्वं समर्घं नात्र संशयः ॥८७॥

अथमास[4]त्रयोर्मध्ये कर्पासं संग्रहेद्बुधः[5] ।
चैत्रवैशाखयोर्मध्ये गोधूमश्च युगंधरी ॥८८॥

त्रिकुटा चणका तोरि मञ्जिष्ठं मुद्गसंग्रहम् ।
जीरकं सर्षपञ्चैव अजमोदादयस्तथा[6] ॥८९॥

हरीतकी शर्करा च त्रीनि मासानि संग्रहेत् ।
लाभो द्विगुणितो ज्ञेयो नात्र कार्या विचारणा ॥९०॥

## [ मीनराशिगतगुरुफलम् ]

मीनस्य लक्षणं वक्ष्ये यदि याति बृहस्पतिः ।
विष[7]प्रभो भवेन्मेघः पटवन्धस्य कारणम् ॥९१॥

फाल्गुनं वत्सरं चैव सोऽपि राजा प्रजायते ।
खण्डं खण्डं भवेन्मेघो नवखण्डा च मेदिनी ॥९२॥

धान्यं समर्घतां याति मानवाः[8] व्याधि पीडिताः ।
घोरव्याधिभवेत्तत्र कण्ठोदरजलोदरैः ॥९३॥

---

१. 'भुङ्क्ते' *ध*, अन्यत्र 'भोजने' ।
२. 'विष्टं भवति सूचिका' *स* याति वृष्टिं भमूचकाः' *ध* 'याति विष्ठमत्यूचिका' *व* अन्यत्र याति विष्ठं विसूचिका, [विषूचिका] हैजा इत्यर्थः ।
३. [विष्टिं] व्याप्ति इत्यर्थः ।
४. [मासद्वयोर्मध्ये] ।
५. 'बुधैः' *ध*, अन्यत्र 'बुधः' ।
६. 'वच' *ध* ।
७. [विषप्रदो] ।
८. पाठाभावः *ध* ।

जीवहत्यादिघातश्च जायते च मेदिनी[1] दिने ।
पूर्वे सुभिक्षमायाति दक्षिणेषु महर्घता ॥६४॥

पश्चात्सुभिक्षमायाति उत्तरे मध्यमं भवेत् ।
देवान्न पूजयेल्लोकाः परद्रव्यमभाषतः[2] ॥६५॥

महर्घ्यं जायते देवि षण्मासं नात्र संशयः ।
कर्पासं हिंगुशुण्ठिंच मरिचं कुङ्कुमादयः[3] ॥६६॥

कर्त्तव्यः संग्रहो देवि पञ्चमासं तु विक्रयेत् ।
त्रिगुणोऽपि[4] भविष्यन्ति व्यासस्य वचनं यथा ॥६७॥

**इति श्रीरुद्रयामले उमामहेश्वरसम्वादे मेघमालायामर्घकाण्डे मेघस्वरूपादि[5]वर्णद्वादशराशिगतगुरुफलाध्यायः प्रथमः ॥१॥**



---

१. [दिने] ।
२. 'भापत' *ध*, *व* ।
३. 'कुङ्कुमं तथा' *ध* ।
४. [लाभश्च त्रिगुणो ज्ञेयो] ।
५. [स्वरुपवर्णादि] ।

## द्वितीयोऽध्यायः

### पार्वत्युवाच

अन्यत् कथय देवेश यदि तुष्टोऽसि मे प्रभो ।
हरेण भाषितं यत्र[1] तस्मादपि श्रुतं मया ॥१॥

महादेव[2] हितं ब्रूहि प्रजानां च मयि प्रभो ।
अधमा मध्यमा श्रेष्ठा कथं तेषां प्रजायते ॥२॥

सुभिक्षमथदुर्भिक्षं माण्डवं विग्रहादि च ।
लोकानां विविधाकारं रोगी[3] कृच्छ्रा कथं भवेत् ॥३॥

ईदृशं यदि देवेश प्रतिवर्षसमुद्भवः ।
तदाहं श्रोतुमिच्छामि कथयस्व कृपाकर ॥४॥

### ईश्वर उवाच

कथयामि वरारोहे क्रूराः सौम्याश्च वत्सराः[4] ।
येषां यानि च रूपानि तेषां तानि शृणुष्वमे ॥५॥

---

१. 'यत्तदापि श्रुतं तु यत् घ, स ।
२. 'मयादेव हितं बुद्धि' अ ।
३. [रोगकृच्छ्रं] ।
४. 'वच्छराः' व ।

[ सम्वत्सरनामानि ]

प्रभवो१ विभवः२ शुक्लः३ प्रमोदोऽथ४ प्रजापतिः५ ।
अङ्गिरा६ श्रीमुखो७ भावो८ युवा९ धाता१० तथैव च ।।६।।

ईश्वरो११ बहुधान्यश्च१२ प्रमाथी१३ विक्रमो१४ वृषः१५ ।
चित्रभानुः१६ स्व[1]भानुश्च१७ तारणः१८ पार्थिवो१९ व्ययः२० ।।७।।

सर्वजित्२१ सर्वधारी२२ च विरोधी२३ विकृतिः२४ खरः२५ ।
नन्दनो२६ विजयश्चैव२७ जयो२८ मन्मथ२९ दुर्मुखौ३० ।।८।।

हेमलम्बो३१ विलम्बश्च३२ विकारी३३ सार्वरी३४ प्लवः३५ ।
शुभकृत्३६ शोभनः३७ क्रोधी३८ विश्वावसु३९ पराभवौ४० ।।९।।

प्लवङ्गः४१ कीलकः४२ सौम्यः४३ साधारण४४ विरोधकृत्४५ ।
परिधावी४६ प्रमाथो[2]४७ च आनन्दो४८ राक्षसो४९ नलः५० ।।१०।।

पिङ्गलः५१ कालमुक्तश्च५२ सिद्धार्थी५३ रौद्र५४ दुर्मतिः५५ ।
दुंदुभि५६ रुधिरोद्गारी५७ रक्ताक्षः५८ क्रोधनः५९ क्षयः६० ।।११।।

[ सम्वत्सरफलम् ]

ईश्वर उवाच

बहुतोयप्रदामेघा बहुशस्याच[3] मेदिनी ।
बहुक्षीरधृता गावो प्रभवाब्दे वरानने ।।१२।।

सुभिक्षं क्षेममारोग्यं प्रशान्ताश्च नरेश्वराः ।
हृष्टपुष्टजनाः सर्वे विभवे परिकीर्तिता ।।१३।।

---

१. 'सुभानुः' सू० सि० कपिलेश्वर० पृ० ३६ ।
२. 'प्रमादी' सू० सि० कपिलेश्वर० पृ० ३६ ।
३. 'शस्याश्च' *ध, व* ।

रोगा बहुविधा प्रोक्ता पीड्यन्ते नरकुञ्जराः ।
सर्वे चैव प्रणश्यन्ति शुक्लाब्दे च वरानने ॥१४॥

उन्मत्तं च जगत्सर्वं धनधान्यसमाकुलम् ।
नित्योत्सवः प्रवृद्धिश्च प्रमोदे जायते प्रिये ॥१५॥

निरोगाश्च जनाः सर्वे निराबाधा[1] गतद्विषः[2] ।
बहुक्षीरस्तथा गावो प्राजापत्ये वरानने ॥१६॥

निरातंकं जगत्सर्वं सर्व[3]धान्यसमन्वितम् ।
अङ्गिराब्दे जनाः सर्वे नित्योत्साही सदासुखी ॥१७॥

सुभिक्षं क्षेममारोग्यं वर्षाकालं सुशोभनम् ।
शस्यवृद्धिः प्रजायेत श्रीमुखे सुरवन्दिते ॥१८॥

बहुक्षीरस्तथा गावो मेघा बहुजलप्रदाः[4] ।
जायन्ते सर्वशस्यानि भावे वर्षे वरानने ॥१९॥

हाहाभूतं जगत्सर्वं सर्वधान्यमहर्घता ।
तैलं घृतं समं याति युवा सम्वत्सरे प्रिये ॥२०॥

निष्पत्तिः सर्वशस्यानां[5] मध्यं वारि प्रकीर्तितम् ।
वृक्ष-क्षीर-गुडादीनां धाताब्दे च वरानने ॥२१॥

सुभिक्षं क्षेममारोग्यं कार्पासस्य महर्घता ।
लवणं मधुगव्यं च ईश्वरे दुर्लभं प्रिये ॥२२॥

---

१. 'निराबाधा' *अ* ।
२. *धं*, विहाय सर्वत्र गतद्विजः ।
३. [धनधान्य] ।
४. *धं* विहाय सर्वत्र 'जलस्तथा' ।
५. *धं* विहाय सर्वत्र 'सर्वशस्यार्घं' ।

अनीतिरतुलावृष्टिर्बहुधान्ये तु वत्सरे ।
समृद्धिर्धान्यविविधैः सुपुराणेऽखिलाधरे ॥२३॥

राज्यनाशोऽथ[1] दुर्भिक्षं तथा तस्करतोभयम् ।
क्वचित्सौख्यं क्वचिद्दुखं प्रवृत्तेऽब्दे[2] प्रमाथिनि ॥२४॥

सुभिक्षं क्षेममारोग्यं सर्वव्याधिविवर्जितम् ।
हृष्टपुष्टजनाः सर्वे विक्रमाब्दे वरानने ॥२५॥

कोद्रवाः शालिमुद्गाश्च यवाश्च द्विदलं तथा ।
सुभिक्षं वरधान्येषु वृषाब्दे शुभलोचने ॥२६॥

चणका मुद्गमाषाश्च कङ्गुन्यश्च तथैव च ।
विचित्रं जायते वृष्टिश्चित्रभानौ न संशयः ॥२७॥

सुभिक्षं क्षेममारोग्यं स्वस्थं च निरुपद्रवम् ।
व्यवहारे भवेच्छ्रेष्ठं स्वभानौ च वरानने ॥२८॥

दुर्भिक्षं जायते घोरं चौरोपद्रवसङ्कुलम् ।
अनावृष्टिः समाख्याता तारणाब्दे वरानने ॥२९॥

बहुशस्यानि जायन्ते सर्वदेशेषु सुन्दरि ।
सौराष्ट्रे लाटदेशे च पार्थिवे वत्सरे सदा ॥३०॥

अल्पा च जायते वृष्टिः धान्यमौषधिपीडितम् ।
शस्यं भवति सामान्यं व्यये सम्वत्सरे प्रिये ॥३१॥

---

१ *धं* विहाय सर्वत्र 'राजा' ।
२. *धं* विहाय सर्वत्र 'प्रवर्त्तेऽब्दे' ।
३. *न ध* विहाय सर्वत्र 'बहुशस्यानि' ।
४. *अं* विहाय सर्वत्र 'सौराष्ट्रे लाट देशे च' ।

तोयपूर्णा भवेद्धात्री सर्वधान्यैः प्रपूरिता ।
सुभिक्षं सुस्थिरं[1] सर्वं सर्वजिद्वत्सरे प्रिये ॥३२॥

ज्वराग्निः प्रवलं प्रोक्तं धान्यमौषधिपीडनम् ।
सर्वधारिवत्सरे च कष्टं लोके प्रजायते ॥३३॥

प्रजा[2] वैकल्पता घोरं पीडनं व्याधितस्करैः ।
अल्पक्षीरधृता गावो विरोधिवत्सरे प्रिये ॥३४॥

उपप्लवैर्जगत्सर्वं वत्सरे शलभैः सदा ।
विकृता जलवृष्टिः स्यात् विकृते च सुशोभनम् ॥३५॥

अल्पोदकास्तथा मेघा वर्षन्ते खण्डमण्डले ।
निष्पत्तिः सर्वशस्यानां खरे सम्वत्सरे प्रिये ॥३६॥

सुभिक्षं क्षेममारोग्यं सौख्यं भवति शोभनम् ।
बहुक्षीरधृता गावो नन्दने नन्दिता प्रजाः ॥३७॥

क्षत्रियाश्च तथा वैश्याः शूद्राश्च नटनृत्यकाः ।
पीड्यन्ते प्रचुरैः रोगैः विजये शस्य संयुता ॥३८॥

मानुषं दुःखसङ्कष्टं नागदंशसमाकुलम् ।
सुभिक्षं स्वच्छता राष्ट्रे जये चैव वरानने ॥३९॥

तुषधान्यं क्षयं याति कोद्रवान्नमहर्घता ।
व्यवहारेण जायन्ते मन्मथे दुःखिता प्रजा ॥४०॥

पीड्यन्ते सर्वधान्यानि वृष्टिः नैव प्रजायते ।
दुर्भिक्षं दुर्मुखे नित्यं मयाख्यातं सुलोचने ॥४१॥

---

१. 'सुस्थिरं' अ, अन्यत्र 'संस्थितं' ।
२. [प्रजाविकलता घोरा] ।
३. 'स्वस्थिता' अ, अन्यत्र 'स्वच्छता' ।

तस्करैः पार्थिवः देवि अभिभूतमिदं जगत् ।
अर्घ्यं भवति सामान्यं हेमलम्वे महोदये ॥४२॥

विषमस्थं जगत्सर्वं विविधोपद्रवैर्युतम् ।
मूषकेन प्रपीड्यन्ते विलम्बेन सुरेश्वरि ॥४३॥

अल्पोदका भवेन्मेघा धान्य[1]मौषधिपीडितम् ।
दुर्भिक्षं जायते सर्वं विकारि वत्सरे भुवि ॥४४॥

मेदिनी[2] शुष्कतां सर्वे धन-धान्यं प्रपीडनम् ।
सर्वदा वर्षते क्वापि पीड्यन्ते मानवाः भुवि ॥४५॥

धनधान्यसमायुक्तं जगत्सर्वं चराचरम् ।
मेघाश्च प्रवला ज्ञेया प्लव सम्वत्सरे प्रिये ॥४६॥

सुभिक्षं सर्वदेशेषु तृप्तिर्गो[3]ब्राह्मणेषु च ।
लभते[4] च प्रजासौख्यं शुभकृद्वत्सरे प्रिये ॥४७॥

सुभिक्षं क्षेममारोग्यं सौख्यं च निरुपद्रवम् ।
नन्दन्ते ब्रह्मणा गावो शोभने च वरानने ॥४८॥

विषमस्थं जगत्सर्वं व्याधिवृन्दसमाकुलम् ।
अल्पवृष्टिस्तु विज्ञेया क्रोधे क्रोधः प्रजायते ॥४९॥

सर्वत्र जायते सौख्यं वृष्टिश्चैव सुरेश्वरि ।
विश्वावसौ महादेवि कर्पासस्य[5] महर्घता ॥५०॥

---

१. 'अन्य' ध, अन्यत्र 'सर्वं' ।
२. [मेदिनी शुष्कतां याति धनधान्यस्य पीडनम्] ।
३. क्षत्रिय' स, अन्यत्र 'तृप्तिः' ।
४. स मातृकायां पाठाभावः ।
५. 'कर्पासस्य' ध, अन्यत्र 'कर्पासं च' ।

पार्थिवैः मण्डलीकैश्च सामन्तैर्दण्डनायकैः ।
पीडिता वै प्रजाः सर्वे क्षुधार्ताश्च पराभवे ।।५१।।

तुषधान्यानि पीड्यन्ते ग्रीष्मे वर्षति माधवः ।
प्लवङ्गे पीडिताः सर्वे सप्तद्वीपं[1] भूमण्डले[2] ।।५२।।

तोयपूर्णो भवेन्मेघो वर्षते च धरातले ।
उपद्रवन्ति[3] राजानः कीलके सर्वदा प्रिये ।।५३।।

जायन्ते सर्वधान्यानि स्वस्थं च निरुपद्रवम् ।
सौम्यं वृष्टिं वरारोहे सौम्ये सौम्यं प्रजायते ।।५५।।

जल[4]पूर्णो भवेन्मेघो वर्षते च दिने-दिने ।
साधारणे समर्घ्यं स्याद्देवेशि नात्र संशयः ।।५६।।

माधवो वर्षते देवि देशे च खण्डमण्डले ।
अहिक्षेत्रे कान्यकुब्जे विरोधे कृषिनाशकृत् ।।५७।।

सुभिक्षं क्षेममारोग्यं धनधान्यसमागमम्[5] ।
इष्टमित्रोपकारी च परिधावी वरानने ।।५८।।

निष्पत्तिः सर्वशस्यानां सर्वरसमहर्घता ।
सुभिक्षं च तथा सौख्यं प्रमाथौ नात्र संशयः ।।५९।।

---

१. 'सिद्धीयं' ध, अन्यत्र 'सप्तद्वीपं' ।

२. भुविमण्डलं' ध, अन्यत्र 'भूमण्डले' ।

३. ५४ श्लोकस्योत्तरार्धादारभ्य ५५ श्लोकं यावत् पाठाभावः अ, व मातृकयोः ।

४. 'जलपूर्णो' ध, अन्यत्र 'जलार्णव' ।

५. 'कुलं' ध अन्यत्र 'गमम्' ।

नश्यन्ति सर्वशस्यानि[1] सर्वधान्यमहर्घता ।
घृतमघ्यं[2] च तैलं च आनन्दे नन्दिता जनाः ॥६०॥

कोद्रवाशालिमुद्गादि पीडिता स्युर्वरानने ।
सर्वधान्यानि चार्धाङ्गि राक्षसे पीडिताः प्रजाः ॥६१॥

दुर्भिक्षं जायते सर्वं धान्यमौषधिपीडनम् ।
नले च धनधान्यानि समाख्यातं वरानने ॥६२॥

गवादयो विनश्यन्ति चान्ये च नटनृत्यकाः ।
मेघो न वर्षते तत्र पिङ्गले नात्र संशयः ॥६३॥

गोमहिष्यं हिरण्यश्च रौप्यं ताम्रं विशेषतः ।
सर्वस्वं विक्रयित्वा च कर्त्तव्यो धान्यसंग्रहः ॥६४॥

तेन धान्येन देवेशि दुर्भिक्षं क्रमते जनाः ।
माधवो वर्षते देवि सर्वशस्यं प्रजायते ॥६५॥

प्रजानां जायते रौग्यं कालयुक्तं विशेषतः ।
राजयुद्धं भवेद्घोरं प्रजानाशं वरानने ॥६६॥

तोयपूर्णो भवेन्मेघो बहुशस्या वसुन्धरा ।
सुखिनः पार्थिवाः सर्वे सिद्धार्थे शृणु सुन्दरि ॥६७॥

अल्पतोयप्रदा मेघा अल्पशस्या च मेदिनी ।
निष्ठुरा[3]: पार्थिवाः सर्वे देवि रौद्रं प्रजायते ॥६८॥

सुभिक्षं भुवि सामान्यं व्यवहारं प्रवर्तते ।
भवेच्च मध्यमावृष्टिर्दुर्मुखे वत्सरे प्रिये ॥६९॥

---

१. 'सर्वधान्यमहर्घता' *ग*, अन्यत्र 'पीडितास्स्युर्वरानने' ।
२. ६० श्लोकस्योत्तरार्धादारभ्य ६१ श्लोकस्य पूर्वार्द्धं यावत् *अ* मातृकायामभावः ।
३. 'निष्ठुराः' *ग*, अन्यत्र 'निष्कराः' ।

सुभिक्षं[1] जायते स्वस्थं सर्वोपद्रववर्जितम् ।
प्रजानां जायते सौख्यं दुन्दुभौ च न संशयः ।।७०।।

अन्यच्च कथयिष्यामि शृणुष्वैकमना प्रिये ।
सर्वस्वं विक्रयित्वा च कर्त्तव्यो धान्यसंग्रहः ।।७१।।

परस्परं नरेन्द्राणां संग्रामं दारुणं भवेत् ।
सर्वमेतद्विशेषेण रुधिरोद्गारि वत्सरे ।।७२।।

दुर्भिक्षं च महादेवि क्रूरचेष्टा नराधिपाः ।
संग्रामं च करोत्युग्रं रक्ताक्षे नैव संशयः ।।७३।।

रोगो मरण-दुर्भिक्षं विविधोपद्रवाकुलम् ।
क्रोधे तु विषमं सर्वं मयाख्यातं सुलोचने ।।७४।।

मण्डलं कुरुदेशं च कालिञ्जर समन्वितम् ।
क्षयं क्षयन्ति सर्वत्र नान्यथा नगनन्दिनि ।।७५।।

षष्ठिसम्वत्सरस्यास्य फलं चैव शुभाशुभम् ।
कथितं तव चार्धाङ्गि गुह्यात्गुह्यतरं मया ।७६।।

दुर्लभं मानुषं लोके शास्त्रादि प्रत्ययावहम् ।
मया ते कथितं सर्वं[2] त्रिलोकप्रकटीकृतम् ।।७७।।

**इति श्रीरुद्रयामले सरोद्वारे उमामहेश्वरसम्बादे मेघमालायां**
**अर्धकाण्डे षष्ठिसम्वत्सरफलाध्यायो द्वितीयः ।।२।।**

●

---

१. 'सुभिक्ष' *ध* अन्यत्र 'दुर्भिक्ष' ।
२. 'तेष' *अ* अन्यत्र 'सर्वं' ।

## तृतीयोऽध्यायः

**पार्वत्युवाच**

को राजा कश्च मन्त्री स्याद्धान्यमेघाधिपश्च को ।
देव देव नमस्तुभ्यं कथ्यतां फलसंयुतम् ॥१॥

**ईश्वर उवाच**

चैत्रादि मेषचापार्द्रा[1] तुलाकर्कटकेषु च ।
नृपमन्त्री धान्यमेघ रसशस्याधिपाः क्रमात् ॥२॥

**[ राज्ञः फलम् ]**

सूर्ये नृपे स्वल्पजलाश्च मेघा,
स्वल्पं च धान्यं फलमल्पवृक्षम् ।
अल्पं[2] पयो गोषु जनेषु पीड़ा,
चौराग्निशंका मरणं नृपाणाम् ॥३॥

सोमे नृपे मङ्गलशोभनानि,
प्रभूतवृष्टिं प्रचुरं च धान्यम् ।
सौख्यं जनानां उदयं नृपाणाम्,
प्रशाम्यते व्याधिज्वरा नराणाम् ॥४॥

---

१. 'चापार्द्रा' ध, अन्यत्र 'चापार्धं' ।
२. 'चयो' अ ।

भौमे नृपे चाग्नि-भयं नराणाम्,
चौराकुला पार्थिवविग्रहं च ।
दुःखं प्रजाव्याधिवियोग-पीड़ा,
तुच्छं जलं वर्षति खण्डमण्डले ॥५॥

बुधस्य राज्ये सजलं महीतलम्,
गृहे-गृहे तुर्य[1] विवाहमङ्गलम् ।
स्वस्थं सुभिक्षं धनधान्ययुक्तम्,
प्रवर्तते दान द्विजार्चनं च ॥६॥

गुरौ नृपे वर्षति हेमधारया,
मही भवेत्कामदुधाश्च धेनवः ।
यजन्ति विप्रान् बहुचाग्निहोत्रम्,
महोत्सवं सर्वजनेषु वर्तते ॥७॥

शुक्रस्य राज्ये बहुशस्य-मेदिनी,
प्रभूततोयां च भवेद्धरित्री[2] ।
फलन्ति वृक्षा बहु गो प्रसूताः,
वसुन्धरा पार्थिव-नन्दगोकुलम् ॥८॥

मन्दस्य राज्ये कृत् तत् सकृत् जलम्,
प्रभूतरोगैः परिपीडिता[3] जनाः ।
युद्धं नृपाणां बहुतस्कराद्भयम्,
भ्रमन्ति लोकाः क्षुधया प्रपीडिताः ॥९॥

---

१. 'तूर्णं' *अ* ।

२. 'भवेद्धरित्री *ध*, अन्यत्र 'वसुपूर्णमेदिनी' ।

३. 'प्रपीडिता' *ध* ।

[ मन्त्रीफलम् ]

ईश्वर उवाच

सूर्ये मन्त्रिगते देवि पीडा भवति दारुणा ।
प्रचुरं धनधान्यानि विप्रपीडा महद्भयम् ॥१०॥

रसो महर्घतां याति शिरोवर्तिस्तथैव च ।
देवार्चनमकुर्वन्ति अल्पशस्या च मेदिनी ॥११॥

सोमे मन्त्रिगते देवि स्वस्थं धात्री प्रवर्तते ।
स्वाहाकारं वषट्कारं घट[1]दुग्धाश्च धेनवः ॥१२॥

रसाधं प्रचुरं देवि फलपुष्पा महीरुहा[2] ।
नारीणां पुत्रजननं सदा जनपदेषु च ॥१३॥

भौमे मन्त्रिगते देवि करदग्धस्य वेदनम् ।
अतिसारं बहुक्लेशं शिरोवर्तिश्च दारुणा ॥१४॥

धान्यं महर्घतां याति द्विदलं वर्षते मही ।
अल्पवृष्टिरनारोग्यं कण्ठरोगमहोत्कटम् ॥१५॥

बुधे मन्त्रिगते देवि शुभाः सौम्याश्च पार्थिवाः ।
स्त्रीणां[3] भर्त्ता समा देवि महास्नेहोऽभिजायते ॥१६॥

तुषान्नं प्रचुरं याति तृणशस्यमनेकधा ।
सुभिक्षं क्षेममारोग्यं मेघो वर्षति सर्वदा । १७॥

गुरौ मन्त्रिगते देवि ब्राह्मणानां जयो भवेत् ।
स्वधर्मनिरता लोकाः पार्थिवाश्च तथा प्रिये ॥१८॥

---

१. 'घटदुग्धाश्च' *ध*, अन्यत्र 'वरदुग्धाश्च' ।
२. निभू' *ध* अन्यत्र 'महीरुहा' ।
३. 'स्त्रियाणां च स्वपतिषु महास्नेहो भविष्यति' *अ* ।

शस्यानि च प्ररोहन्ति मेघो वर्षति शोभनम् ।
मूषका शलभा देवि चोत्कटा[1] मर्कटास्तथा ॥१९॥

शुक्रे मन्त्रिगते देवि मूषकाः शलभाः शुकाः ।
इतरो[2] विविधाकारो गुरुवृष्टिस्तु सागरे ॥२०॥

शस्यं महर्घतां याति तस्मिन् काले च नान्यथा ।
सरितो मार्गतां यान्ति जलं मेघैः समाहितम् ॥२१॥

शनौ मन्त्रिगते देवि नश्यन्ते गोकुलं प्रिये ।
व्यवहारा विनश्यन्ति विह्वला भूतदेवताः ॥२२॥

असत्यवादा दृश्यन्ते नानाज्ञानपदाः[3] प्रिये ।
मेघो न वर्षते तत्र सौरष्ट्रे पूर्वसागरे ॥२३॥

स्वयं राजा स्वयं मन्त्री स्वयं शस्याधिपो यदि ।
स्वात्मैव वाहको यत्र यदा ज्ञेयं वरानने ॥२४॥

तत्र तोयं न पश्यामि[4] वर्जयित्वा महानदीम् ।
विक्रयित्वा तदा सर्वं कर्त्तव्यो धान्यसंग्रहः ॥२५॥

[ धान्याधिपफलम् ]

सूर्ये धान्याधिपे जाते अल्पतोयप्रदा घनाः ।
माषमुद्गतिलानां च महर्घं श्रृणु सुन्दरि ॥२६॥

चन्द्रे धान्याधिपे जाते तोयपूर्णा वसुन्धरा ।
वर्द्धन्ते सर्वशस्यानि राजते विविधोत्सवैः ॥२७॥

---

१. 'मूषा च' अ ।
२. 'इतरो' स, अन्यत्र 'इतयो'
३. 'ज्ञान' ध, अन्यत्र 'जन' ।
४. 'पश्यामि' ध, अन्यत्र 'दृश्यन्ते' ।

मुद्गमाषतिलासर्षपा गोधूमाश्च वलाहका: ।
महर्घं[1] जायते घोरं भौमे धान्याधिपे सति ॥२८॥

बहुशस्ययुता पृथ्वी रसानां च महर्घता ।
नीतियुक्ता:[2] सदा भूपा: बुधे धान्याधिपे यदि ॥२९॥

गोधूमशालिमुद्गाश्च कङ्गुमाषाश्च कोद्रवा: ।
सुभिक्षं जायते देवि गुरौ धान्याधिपे यदि ॥३०॥

सुभिक्षं जायते स्वस्थं सर्वोपद्रववर्जितम् ।
शुक्रे धान्याधिपे जाते समर्घ्यं शृणु सुन्दरि ॥३१॥

सौराष्ट्रे लाटदेशे च जायते विग्रहं महत् ।
दुर्भिक्षं च[3] भवेद्घोरं यदा[4] धान्याधिपो शनि: ॥३२॥

## [ मेघाधिपफलम् ]

रवौ मेघाधिपे जाते स्वल्पतोयप्रदा[5] घना: ।
दुर्भिक्षं[6] च भवेल्लोके भयं च भूतले सदा ॥३३॥

चन्द्रे मेघाधिपे जाते[7] बहुतोयं प्रजायते ।
नन्दन्ति पार्थिवा: सर्वे प्रजानां च सुखं सदा ॥३४॥

---

१. 'महर्घं' ***ध***, ***स***, अन्यत्र 'समर्घ्यं' ।
२. 'नीति' ***ध***, अन्यत्र 'नेति' ।
३. 'जायते' ***ध*** अन्यत्र 'च भवेत्' ।
४. 'यदि' ***ध*** अन्यत्र 'यदा' ।
५ 'स्वल्पतोयप्रदा घना:, ***स***, ***ध***, अन्यत्र 'चात्मतोयप्रदा घना': ।
६. 'अल्पं धान्यं' ***ध***, ***स***, अन्यत्र 'दुर्भिक्षं च' ।
७. 'देवि तोयं सञ्जायते बहु' ***ध*** ।

अनावृष्टिर्भवेल्लोके धान्यानां च क्षयो भवेत् ।
रसाश्चैव[1] क्षयं यान्ति भौमे मेघाधिपे सति[2] ॥३५॥

बुधे मेघाधिपे देवि तोयपूर्णा भवेद्भुवि ।
लोकानां जायते स्वास्थ्यं धनधान्य-समागमः ॥३६॥

सुभिक्षं क्षेममारोग्यं सर्व-शस्यं महर्घता ।
इक्षुदण्डगुडश्चैव गुरौ मेघाधिपे यदि ॥३७॥

कोद्रवाः मुद्गमाषाश्च कङ्गुनीयवशालयः ।
माधवो वर्धते देवि शुक्रे मेघाधिपे सति[3] ॥३८॥

शनौ मेघाधिपे तोयं क्षयं याति सहस्रधा ।
देशास्तु प्रलयं यान्ति सर्वशस्य महर्घता ॥३९॥

[ रसाधिपफलम् ]

घृतं तैलं गुडं क्षौद्रं ये चान्ये मधुरादयः ।
अर्घवृद्धिं[4] प्रजायेत सूर्ये यदि रसाधिपे ॥४०॥

घृतं तैलं गुडं क्षौद्रं पयश्च दधिशर्करा ।
सर्वं समर्घतां याति चन्द्रे यदि रसाधिपे ॥४१॥

राजिका लवणं शर्ष[5] तिलं तैलं गुडादिकम् ।
अर्घवृद्धिं[6] भवेल्लोके भौमे यदि रसाधिपे ॥४२॥

---

१. 'रसाश्चैव' ध, अन्यत्र 'रसानां' ।
२. 'यदि' ध ।
३. 'सति' अ, स अन्यत्र यदि ।
४. 'अर्धवृष्टिः' अ, स ।
५. [सर्पिः] ।
६. 'अर्धवृष्टिः' अ, स ।

भवन्ति गावः सदुग्धा फलिता वृक्षजातकाः ।
नीतियुक्ताः सदा भूपाश्चन्द्रपुत्रे रसाधिपे ॥४३॥

सुबृष्टिर्बहुशस्यानि फलन्ति द्रुमजातयः ।
क्षेमारोग्यं सुभिक्षं स्यात् देवाचार्ये रसाधिपे ॥४४॥

वसुधा पालने शक्ताः[1] भवन्ति नृपपुङ्गवाः ।
बहुशस्यप्रदा पृथ्वी भृगुपुत्रे रसाधिपे ॥४५॥

तुषशस्यमनावृष्टिः सर्वपापरता नराः ।
म्लेच्छानां जायते वृद्धिः सूर्यपुत्रे रसाधिपे ॥४६॥

[ शस्याधिपफलम्[2] ]

शस्याधिपे गते सूर्ये मेघा नश्यन्ति भूतले ।
महर्घ्यं शस्यनाशं च तस्कराः पार्थिवाः प्रिये ॥४७॥

राज्ञा राज्ञे न तत्रैव युद्धते घोर दारुणम् (?) ।
शीतादधित्तदा[3] ज्ञेयं मेघो वर्षति वै भृशम् ॥४८॥

शस्याधिपे गते सोमे वर्षते[4] चामृतो[5]दयम् ।
भोजनं धनधान्यादि सर्वाणि नन्दते प्रिये ॥४९॥

शस्याधिपे गते भौमे गोकुलं[6] नश्यते प्रिये ।
गजवाजि तथा चोष्ट्रा गर्धभाद्या विनश्यति ॥५०॥

---

१. 'शक्तिः' *अ, स* ।
२. [शस्यं क्षेत्रगतं प्रोक्तं सतुषं धान्यमुच्यते ।
निस्तुषः तण्डुलः प्रोक्तः स्विन्नमन्नमुदाहृतम् ॥]
३. [शीताधिक्यं] ।
४. 'वर्पते' *द*, अन्यत्र 'वर्षति' ।
५. 'चामृतोदयम्' *द* अन्यत्र 'चामृतोपमम्' '
६. 'बहुशस्या विनश्यति' *व* 'बहुवा कला विनश्यति' *अ* ।

शस्याधिपे गते सौम्ये बहुवर्षन्ति वै घनाः[1] ।
शस्यं समर्घतां याति प्रनष्टास्तत्र[2] तस्कराः ॥५१॥

गुरौ शस्याधिपे जाते[3] विविधात्र सरीसृपाः ।
दुःखव्याधिसमायुक्ता जायन्ते पार्थिवाः प्रिये ॥५२॥

शस्याधिपे गते शुक्रे प्रजापीड़ा च तस्कराः ।
समर्घ्यं जायते शस्यं माधवो वर्षते[4] प्रिये ॥५३॥

शस्याधिपे गते शौरे[5] पार्थिवाः क्रूरसिद्धयः ।
व्यवहारा विनश्यन्ति भ्रमन्ति स्वेच्छया नराः ॥५४॥

**इति श्रीरुद्रयामले सारोद्धारे उमामहेश्वरसम्वादे मेघमालायां अर्घ्यप्रकरणे राजादिफलाध्यायस्तृतीयः ॥३॥**

---

१. मेघनः 'ध' ।
२. 'चोरसंघं प्रणश्यति' अ ।
३. 'देवि' ध ।
४. 'वर्षति' अ ।
५. सौरि ध ।

## चतुर्थोऽध्यायः

पार्वत्युवाच

### [ मेषादिराशिगतशनिफलम् ]

प्रणमामि महादेवं कृपां कृत्वा ममोपरि ।
राशौ राशौ कथं सम्यक् शनिचारस्तु विस्तरात् ॥१॥

तद्राशि चाथ नक्षत्रं सपादफलसंयुतम् ।
प्रजानां च हितार्थाय देशे देशे विशेषतः[१] ॥२॥

ईश्वर उवाच

### [ मेषराशिगतशनिफलम् ]

मेष[२]राशौ शनिर्गत्वा[३] मासचत्वारि वर्षति[४] ।
सुभिक्षं सर्वमेदिन्यां नराणां परिपीडनम् ॥३॥

---

१. 'विशेषतः' ध, अन्यत्र 'फलं यतः' ।

२. 'मेषराशि' ध ।

३. 'गत्या' ध ।

४. 'वर्षते' ध ।

पुत्रं त्यजति नारी[1] च धनधान्यमहीपतेः ।
उपद्रवं ज्वरैः[2] पीडा गह्वरा[3] यमुनातटे ।.४।।

पीडा[4] स्यात्पूर्वदेशेषु दुर्भिक्षं नर्मदोत्तरे ।
महर्घ्यं तिलकर्पासं सर्करारससंयुतम् ।।५।।

सविहारं यवन्पूरं पीडितो मानवो भवेत् ।
विशेषं स्याद्भयं भीतिः (?) पूर्वतः पश्चिमे गतः ।।६।।

[ वृषराशिगतशनिफलम् ]

वृषराशौ शनिर्गत्वा दुष्टं गोदावरी तटे ।
गोमहिष्यं विनश्यन्ति रक्तधारा प्रवर्तते ।।७।।

पृथिवी[5] शून्यतां याति महाजनो विनश्यति ।
अन्नं च मृत्तिकातुल्यं कथ्यते[6] च महेश्वरः[7] ।।८।।

सुवर्ण[8]रौप्यताम्राणि रसं[9] चैव महर्घता ।
एकादशगते मासे लाभश्चैव गुणत्रयम् ।।९।।

---

१. 'नारीणां *अ, स, व* ।
२. 'ज्वरैः' *ध*, अन्यत्र 'नरैः' ।
३. 'गह्वरा' *स*, अन्यत्र 'गहोरा' ।
४. 'फर्वे च पीडिता देशाः दुर्भिक्षं नर्मदा तटे' *ध* ।
५. 'इहन्यं भवति पृथिव्यां' *ध* ।
६. 'भवन्ति सुरवन्दिते' *अ, व, स* ।
७. [महेश्वरैः] ।
८. 'सुवर्णरौप्यताम्राणि' *व*, अन्यत्र 'सुवर्णी रुप्पताम्राणि' ।
९. 'रसाश्चैवमहर्घता' *ध* [रसस्य च महर्घता] अन्यत्र 'रसं चैव महर्घता' ।

## [ मिथुनराशिगतशनिफलम् ]

मिथुनेऽपि[1] शनिः गत्वा युद्धं गोदावरी तटे ।
भवन्ति नात्र सन्देहो हाहाभूतं जगत्त्रयम्[2] ॥१०॥

क्षत्रभङ्गं भविष्यन्ति[3] सपापा मेदिनी भवेत् ।
सर्वत्र जायते क्लेशो महेशवचनं यथा ॥११॥

अन्नं महर्घतां याति मानुषस्य च पीडनम् ।
पूर्वे वा मध्यदेशे च रससूत्रमहर्घता ॥१२॥

दुर्लभा धातवः सर्वे युद्धं मासचतुर्दशम् ।
देशेषु जायते सर्वं सत्यमेतत् वरानने ॥१३॥

## [ कर्करशिगतशनिफलम् ]

कर्कटस्थे[4] भानुसुते राजविग्रहमेव च ।
नृपेषु[5] जायते युद्धं तृतीये मासि[6] पीडनम् ॥१४॥

नगर्यां जायते क्लेशं रक्तधारा प्रवर्तते ।
शोकश्चैव मनुष्याणां सत्य[7]मेतद्वरानने ॥१५॥

क्षत्र[8]भङ्गाः भविष्यन्ति युद्धं भवति दारुणम् ।
अन्नं च मृत्तिकातुल्यं कर्पाशस्य महर्घता ॥१६॥

---

१. 'मिथुनेऽपि शनिः गत्वा' ध, अन्यत्र मिथुनस्थे सूर्यसुते ।
२. 'प्रवर्तते' ध, अन्यत्र 'जगत्त्रयम्' ।
३. 'करिष्यन्ति' ध, अन्यत्र 'भविष्यन्ति' ।
४. 'कर्कराशिशनिर्गत्वा' ध, अन्यत्र 'कर्कटस्थे भानुसुते' ।
५. 'वङ्गेषु' ध, स, अन्यत्र नृपेषु ।
६. 'शेष' ध, अन्यत्र 'मासि' ।
७. 'महेशवचनं ध्रुवम्' ध, अन्यत्र 'सत्यमेतद्वरानने' ।
८. श्लोक सं० १६ ध, स, अन्यत्र अभावः ।

एकादशगते मासि अन्नस्य समता भवेत् ।
परन्तु जायते चित्रं दैवमेकं महद्भुतम्[1] ।।१७।।

ज्येष्ठे मासि च देवेशि तृतीये[2] यामके शृणु ।
अन्धकारं महारिष्टं घनं सघनसंयुतम् ।।१८।।

जायते[3] नात्र सन्देहो फलमेतद्वरानने[4] ।
इति कर्कंगते सौरे फलं सम्यगुदीरितम् ।।१९।।

## [ सिंहराशिगतशनिफलम् ]

सिंहस्थे[5] सूर्यतनये तस्करा बहुमेदिनी ।
दारुणं[6] कलियुद्धं च विनश्यति महाजनः ।।२०।।

हाहाभूतं[7] भवेत्पृथ्वी म्लेच्छजातं[8] वरानने ।
उपद्रवं[9] महाप्रोक्तं म्लेच्छरुपा च मेदिनी ।।२१।।

हाहाकारो भवेद्देशे भाषितं च महेश्वरि ।
अन्नं महर्घतां याति हाहाभूतं प्रचेतसा ।।२२।।

देशत्रये[10] भवेत्पीडा चन्देली गौडसंभले ।
चतुष्पदं तथा गव्यं शर्करारससंयुतम् ।।२३।।

---

१. 'भवेद्ध्रुवम्' ध अन्यत्र 'महद्भुतं' ।
२. 'यामश्चैव तृतीयकम्' ध, अन्यत्र तृतीये यामके शृणु ।
३. श्लो० सं० १९ अभावो व मातृकायाम् ।
४. 'सत्यमेतत्' ध, अन्यत्र फलमेतत् ।
५. 'सिंहराशिं शनिर्गत्वा' ध, अन्यत्र 'सिंहस्थे सूर्यतनये' ।
६. 'महाजनो विनश्यन्ति कलियुद्धं च दारुणम्' ध, अन्यत्र 'दारुणं कलियुद्धं च विनश्यति महाजनः' ।
७. श्लो० सं० २१-२२ अभावः ध मातृकायाम् ।
८. 'पातं' व, अन्यत्र जातं' ।
९. श्लो० सं० २१ (उत्तरार्द्धः) २२ (पूर्वार्द्धः) अभावः व मातृकायाम् ।
१०. 'त्रीणिदेशे' ध ।

सर्वं महर्घतां याति सत्यमेतद्वरानने[१] ।

[कन्याराशिगतशनिफलम् ]

कन्या[२]राशिस्थिते सौरे संग्रामं स्याद्वरानने[३] ॥२४॥
जयस्तत्र[४] नरेन्द्राणां म्लेच्छहानिर्दिने दिने ।

महायुद्धं भवेत्पृथ्वी सत्य[५]मेतत्सुरेश्वरि ॥२५॥
माता च[६] त्यजते पुत्रं पशूनाञ्च[७] विनाशनम् ।

क्षत्रभङ्गं[८] भविष्यन्ति अन्नं चैव महर्घता ॥२६॥
लवणं तिलकर्पासं रसानां च[९] विनाशनम् ।

[ तुलाराशिगतशनिफलम् ]

तुला[१०]स्थिते भानुसुतेदुर्भिक्षमुत्तरापथे[११] ॥२७॥
हाहाभूता भवेत्पृथ्वी म्लेच्छघातं[१२] वरानने ।
उपद्रवं महाप्रोक्तं म्लेच्छरुपा च मेदिनी ॥२८॥

---

१. 'महेशवचनं यथा' *ध*, अन्यत्र सत्यमेतद्वरानने ।
२. 'कन्याराशिशनिर्गत्वा' *ध*, अन्यत्र 'कन्याराशिस्थिते सौरे' ।
३. 'च धरातले' *ध*, अन्यत्र 'स्याद्वरानने' ।
४. 'जयशस्त्रं' *ध* ।
५. 'सत्यमुक्तं तु पार्वति' *ध*, अन्यत्र 'सत्यमेतत्सुरेश्वरि' ।
६. 'पुत्रं परित्यज्य' *ध* अन्यत्र 'च त्यजते पुत्रं' ।
७. 'पुमांश्चैव विनाशनम्' *अ*, अन्यत्र 'पशूनाञ्च विनाशनम्' ।
८. [क्षत्रभङ्गाः भविष्यन्ति अन्नस्य च महर्घता] ।
९. 'च विनाशनं' *ध*, अन्यत्र 'सर्वनाशनम्' ।
१०. 'तुलाराशिशनिर्गत्वा' *ध*, 'तुलास्थिते भानुसुते' *व*, अन्यत्र 'तुलापापभानुसुते' ।
११. 'तु भवेत्तदा' *व*, अन्यत्र 'उत्तरापथे' ।
१२. प्लक्ष '*अ*', अन्यत्र 'म्लेच्छ' ।

हाहाकारो भवेद्देशे उपद्रवसमाकुलम्[1] ।
कार्पा[2]सरसतैलानां जायते च महर्घता ॥२९॥

समयं च सुभिक्षं स्यात् चक्रवर्ती विनश्यति ।
म्लेच्छानां[3] भङ्गमायान्ति[4] राजानाश्च[5] जयोभवेत् ॥३०॥

मध्यदेशे भवेद्युद्धं सत्यमुक्तं वरानने ।

[ वृश्चिकराशिगतशनिफलम् ]

मन्दगते[6] वृश्चिकस्थे पूर्वदेशस्य पीडनम् ॥३१॥

पतङ्गं जायते भूमौ युद्धं च प्रलयं भवेत् ।
विग्रहं च कुरुक्षेत्र सङ्ग्रामं दारुणं भवेत् ॥३२॥

पश्चिमे पञ्चवर्षाणि मासमेकं निरन्तरम् ।
तस्कराणां भयं याति मम सत्यवचं शृणु ॥३३॥

वनं कुठाराभिछेदं नूतनं स्रजते[7] पुनः ।
स्वर्णं च रुप्यरत्नानि विकृतं तदनन्तरम् ॥३४॥

राशेश्च निर्गते सौरे कर्त्तव्यो धान्यसंग्रहः ।
तुषारं पातितं चापि मूषकस्य भयं भवेत् ॥३५॥

---

१. भाषितं च महेश्वरे 'ध', अन्यत्र 'उपद्रवसमाकुलम्' ।
२. 'कर्पासरसतैलानां' ध, अन्यत्र 'रसानि तिलकर्पासं' ।
३. [म्लेच्छाश्च] ।
४. 'भवेद्भङ्गो' ध, अन्यत्र 'भङ्गमायान्ति' ।
५. 'राजा जयति निश्चय' अ, अन्यत्र 'राजानाञ्च जयो भवेत् ।
६. 'वृश्चिके च शनिर्गत्वा' ध, अन्यत्र 'मन्दगते वृश्चिकस्थे' ।
७. 'सृज्यते' ध, अन्यत्र 'स्रजते' ।

आयाति शलभं[1] वापि महारिष्टं सुलोचने ।

[ धनूराशिगतशनिफलम् ]

धनू[2]राशि शनिर्गत्वा पश्चिमं देशपीडनम् ॥३६॥
सुभिक्षं जायते स्वस्थं लाभो भवति निश्चयम्[3] ।
अन्तर्वेदि[4] कन्नौजं च सोद्वात्यं[5] परिपीडनम् ॥३७॥
रक्तधारा प्रवाहः स्यात् तवस्नेहेन भाषितम् ।

[ मकरराशिगतशनिफलम् ]

मकरस्थे[6] मन्दगते दुर्भिक्षं नर्मदा तटे ॥३८॥
मातृ[7]भिस्त्यजते पुत्रं सर्वलोके महीतले ।
अन्तर्वेदे तथा विन्ध्ये दुर्भिक्षं स्याद्वरानने ॥३९॥
अथवा जायते रोगं महेश वचनं ध्रुवम् ।
नृपाणां जायते युद्धं परस्पर[8] महार्णवम् ॥४०॥
मञ्जीष्ठं चन्दनं द्राक्षा कर्पासस्य महर्घता ।

[ कुम्भराशिगतशनिफलम् ]

शनिर्मूलत्रिकोणस्थं दुर्भिक्षं गोदावरी तटे ॥४१॥

---

१. 'शलभायापि आयान्ति' ध, अन्यत्र 'आयातिशलभं वापि' ।
२. 'धनुराशे' ध, अन्यत्र 'धनुराशि' ।
३. 'भानुवः' ध, अन्यत्र 'निश्चयं' ।
४. [अन्तर्वेद्या कन्नौजे सोद्वासं परिपीडनम्] ।
५. 'सोद्वासं' ध, अन्यत्र सोद्वात्यं ।
६. 'मकरे च शनिर्गत्वा' ध, अन्यत्र मकरस्थे मन्दगते ।
७. "पुत्र त्यजति नारी च" ध, "अन्यत्र मातृभिस्त्यजते पुत्र" ।
८. 'स्वरं स्वर' अ, अन्यत्र 'परस्पर' ।

जयन्ती जायते युद्धं महाभयमुपस्थितम् ।
उपद्रवा भवेत्पृथ्वी बहुरोगं महीतले ॥४२॥

सन्तापं जायते सर्वं जयन्ती यवनस्तदा[१] ।
पश्चिमे जायते युद्धं महाजनविनाशनम् ॥४३॥

गोमहिष्या क्षयं यान्ति शृणु देवि मयोदितम् ।
राजवंशी विनश्यन्ति चन्देली युद्धदारुणम् ॥४४॥

गौडदेशे बिहारे च पीडा स्यात् सुरवन्दिते ।

[ मीनराशिगतशनिफलम् ]

शनिर्गते[२] मीनराशौ दुर्भिक्षं सम्भवं भवेत् ॥४५॥

मानवानां भवेद् व्याधि रक्तधारा प्रवर्तते[३] ।
विग्रहं च महाघोरं सर्व[४]देशेषु भाषितम् ॥४६॥

महर्घ्यं जायते शस्यं पशूनां चैव नाशनम् ।
सर्वधान्यं क्षयं याति एतत् सत्यं वरानने ॥४७॥

धातुसम्बन्धिनश्चान्ये मृत्तिकातुल्यमेव[५] च ।

[ सप्तविंशतिनक्षत्रगतशनिफलम् ]

यदाश्विन्यां गतः सौरिस्तदा दुर्भिक्षकारकः ॥४८॥

नराणां जायते रोगं पशवेषु महर्घता ।
यमर्क्षे जायते शौरि लोहारं कुम्भकारकम् ॥४९॥

---

१. 'यवनक्षदा' अ, 'यवनस्तदा' व, अन्यत्र 'पवनं तदा' ।
२. 'मीनराशि शनिर्गत्वा' ध, अन्यत्र 'शनिर्गते मीनराशौ' ।
३. 'प्रदारु च' अ, अन्यत्र 'प्रवर्तते' ।
४. 'महादेवस्य' ध अन्यत्र 'सर्वदेशेषु' ।
५. 'वरानने' अ अन्यत्र 'मेव च' ।

सत्यं[1] प्रपीड्यते देवि ब्रह्मणो वचनं यथा ।
कृत्तिकायां गते शौरे तदा देवो न वर्षति ॥५०॥

विप्राणां जायते पीड़ा महर्घ्यं धान्यमेव च ।
रोहिण्यर्क्षे सूर्यसुते धान्यं तिष्ठति सर्वदा ॥५१॥

श्रावणे नैव वर्षन्ति क्षत्र[2]भङ्गं भवन्ति च ।
मृगर्क्षे च यदा सौरिः सर्वधान्यं भविष्यति ॥५२॥

चतुष्पदो भवेन्नाशः देवो वर्षति वै भृशम् ।
शिवर्क्षस्थे भानुसुते सर्वशस्या च मेदिनी ॥५३॥

स्वस्थं देशे सुभिक्षं स्यान्निःसन्देहं वरानने ।
आदित्यर्क्षगते मन्दे भवेद्धान्यमहर्घता ॥५४॥

कङ्गुनी कोद्रवा तोरी अत्तसी[3] बहु जायते ।
सूर्यपुत्रगते पुष्ये तिलमाषप्रजायते ॥५५॥

देवोपि वर्षते किञ्चित् महर्घं जायते ध्रुवम् ।
सार्पर्क्षेषु गते मन्दे चतुर्मासं च वर्षति ॥५६॥

जायते सर्वधान्यानि प्रजासौख्यमविघ्नकम् ।
मघायां च यदा सौरिः तदा देवो न वर्षति ॥५७॥

रसानां च महर्घाणि भाद्रे वापि न वर्षति ।
पूर्व[4]फल्गुनिके शौरिस्तदा चणकमुद्गयः ॥५८॥

---

१. 'स संप्रपीडिते' *अ*, अन्यत्र 'सत्यं प्रपीड्यते' ।

२. 'घनभङ्ग' *अ*, अन्यत्र 'छत्रभङ्ग' ।

३. 'अलसी' *द*, अन्यत्र 'अत्तसी' ।

४. 'पूर्वफलगुनिगते' *द*, *व*, अन्यत्र पूर्वफलगुनिके ।

मासादीनामष्टधान्यं निष्पत्तिः स्याद्वरानने ।
उत्तरास्थे सूर्यसूते पशुः नश्यति निश्चयम् ॥५९॥

तुषधान्यमहर्घानि षण्मासं[1] च वरानने ।
यदा हस्तगते मन्दे प्रजानाशं क्षयं तदा ॥६०॥

गविविप्रादिनाशः स्यात् स्वल्पवृष्टिर्भवेद्ध्रुवम् ।
यदा[2] चित्रागतः शौरिः छत्रभङ्गस्तदा भवेत् ॥६१॥

बहुक्षीरघृता गावो बहुवृष्टिर्भवेद्ध्रुवम् ।
वायुदैवे सूर्यसुते सुभिक्षं स्याद्वरानने ॥६२॥

भवन्ति नात्र सन्देहो मृत्युर्प्रियजनस्य च ।
विशाखायां गते मन्दे शालिगोधूम नश्यति ॥६३॥

पूर्वं वर्षति पर्जन्यं पश्चान्नैव धनागमः ।
अनुराधा गते शौरि कुङ्कुमं मलयस्तथा ॥६४॥

कर्पूरादि महर्घानि तिक्तवस्तूनि[3] यानि च ।
सौरिर्यदैन्द्रर्क्षे स्यात् तदा सर्वं प्रणश्यति ॥६५॥

राजा तस्करतः पीडा क्षयं धान्यस्य निश्चयम् ।
मूलर्क्षस्थे मन्दगते बहुपीडा वरानने ॥६६॥

पशूनां च नराणां च वृष्टिर्मध्यमता तदा ।
पूर्वोत्तराषाढ़गते मन्दे रोगं भविष्यति ॥६७॥

पशूनां मानवानां च नास्ति संदेह पार्वति ।
वैष्णवर्क्षे सूर्यसुते यदा गच्छति पार्वति ॥६८॥

---

१. 'षण्मासान्' व, अन्यत्र 'षण्मासं' ।
२. 'यदा चित्रागतः' व, अन्यत्र 'यदि चित्रागते' ।
३. 'रक्तवस्त्राणि' ख, अन्यत्र 'तिक्तवस्तूनि' ।

फा० ६

तदा चतुष्पदे रोगं देवो वर्षति मध्यमम् ।
वासवर्क्षे गते मन्दे पार्थिवः पीड्यते मही ॥६९॥

गवानां ब्राह्मणानाञ्च पीडनं स्यात्सुलोचने ।
अल्पोदकास्तदा मेघा[1] स्वल्पं शस्यं भवन्ति हि ॥७०॥

तुषधान्यानि जायन्ते तदा रस-समन्वितम् ।
शतभे च गते मन्दे चतुष्पद्-विनाशनम् ॥७१॥

सुवृष्टिः कुरुते मेघो बहुधान्यं भवन्ति हि ।
पूर्वभाद्रपदा संस्थो यदा स्याद्भानुनन्दनः ॥७२॥

तदा शस्यं महर्घ्यं स्यादल्पवृष्टिः प्रजायते ।
वैकर्त्तनोत्तराभाद्रपदेषु यदि गच्छति ॥७३॥

राज्यपीडाल्पवृष्टिश्च स्वल्पं शस्यं प्रजायते ।
यदा पौष्णे गते शौरिः तदा देवो न वर्षति ॥७४॥

हाहाकारं महारौद्रं पृथ्वी कुर्वन्ति पार्वति ।
सुवर्ण रुप्य[2]रत्नाणि विक्रयित्वा सुरेश्वरि ॥७५॥

संग्रहेत् सर्वधान्यानि लाभो भवति पुष्कलम् ।
दुर्भिक्षं मध्यदेशे च पीडाजनपदस्य च ॥७६॥

परस्परं नरेन्द्राणां युद्धं भवति दारुणम् ।

**[ प्रत्येकचरणगतशनिफलम् ]**

**ईश्वर उवाच**

अश्विनी प्रथमे पादे यदा याति शनैश्चरः ॥७७॥

---

१. 'चैव' *व*, अन्यत्र 'मेघा' ।
२. 'ताम्र' *अ*, अन्यत्र 'रुप्यं' ।

श्रीनगरं मध्यदेशं मास[1]मात्रेण नश्यति ।
द्वितीयचरणे देवि सौराष्ट्रः द्रविडं तथा ॥७८॥

समालवं विनश्यन्ति जनस्तूर्णगवादिभिः ।
तृतीये वा चतुर्थे वा यदा गच्छति भास्करी ॥७९॥

कलिङ्गे गौड़देशे च नाशयत्येव निश्चयम् ।
भरणीप्रथमे पादे यदा याति शनैश्चरः ॥८०॥

तदा पश्चात् समुद्रस्य तटे रौरवमादिशेत् ।
द्वितीयपादगे[1] सौरिर्दुर्भिक्षं पुरहर्षणे ॥८१॥

तृतीये पादगे देवि पावकैर्भयमादिशेत् ।
महाशाली च गोधूम[2] व्रीहिशानशसर्षपः ॥८२॥

कर्पासं जीरकं चैव शर्करा गुड़ सुन्दरि ।
घृततैलादिकं सर्वं महर्घानि भवन्ति हि ॥८३॥

चतुर्थस्थे[3] च दुर्भिक्षमलकायां भवन्ति हि ।
तथैवाग्निभयं नित्यं भविष्यन्ति न संशयः ॥८४॥

कृतिका प्रथमे पादे यदा भवति भास्करी ।
विग्रहं जायते लोके घोरं चाग्निभयं भवेत् ॥८५॥

माधवो वर्षते (?) नृपास्तत्र विरोधिनः ।
द्वितीये चरणे देवि यदि भवति सूर्यजः ॥८६॥

---

१. 'मात्रे विनश्यति' *अ*, 'मात्रेऽपि नश्यति' *ब* ।
२. श्लोक सं० ८१ उत्तरार्द्धतः श्लोक सं० ८२ पूर्वार्द्धं यावत् 'अ' मातृकायामभावः ।
३. 'शाली च *ध* अन्यत्र 'गोधूमः' ।
४. 'तुरीयस्थे' *ध*, *स*, अन्यत्र 'चतुर्थस्थे' ।

कृष्णानदी तटे द्वन्दे दुर्भिक्षं भवति ध्रुवम् ।
पादद्वये फलं तुल्यं शृणु भामिनि यत्नतः ॥८७॥

रोहिणी प्रथमे पादे यदा भवति सूर्यजः ।
गोदावरी तटे द्वन्दे दुर्भिक्षं भवति ध्रुवम् ॥८८॥

परस्परं नरेन्द्राणां युद्धं भवति दारुणम् ।
वृष्टिस्तु जायते स्वल्पं वैश्वानर भयं भवेत् ॥८९॥

रोगाः बहुविधा प्रोक्ताः मानवानां वरानने ।
द्वितीये तु यदा शौरिः कङ्गुनीरक्तशालयः ॥९०॥

चणकाकृष्णजीरं च कोद्रवास्तिलवाऽऽत्तसी ।
मसूरा यवगोधूमा माषा मुद्गा कुलत्थकाः ॥९१॥

देशे विराटसंज्ञेषु महर्घानि भवन्ति हि ।
कर्पासं पटसूत्रं च घृततैलादिकं रसः ॥९२॥

अश्वगोमहिषी चैव[1] प्रलयं याति सुन्दरि ।
तृतीयपादगे मन्दे सुवर्णं लोहकं वलम् ॥९३॥

रुप्यकर्पाससूत्राणां रसानां चैव भामिनि ।
इतरदेशे[2] पुरे रम्ये महर्घानि भवन्ति हि ॥९४॥

पादे देवि चतुर्थे तु गौड़देशो विनश्यति ।
सर्वधान्यमहर्घानि जायन्ते नात्र संशयः ॥९५॥

मृगादिचरणे देवि यदा याति शनैश्चरः ।
अभीरदेशं नश्यन्ति अग्निदाहेन सुन्दरि ॥९६॥

---

१. 'चैते' *ध*, 'चैव' *अ*, अन्यत्र 'चैतत्' ।
२. 'इतरेश' *ध*, 'एतद्देशे' *व*, अन्यत्र इतर्देशे [इतरदेशे] ।

सर्वंधान्यं रसादीनां जायते च महर्घता ।
युद्धस्वस्वामिके देशे भवन्ति नात्र संशयः ॥९७॥

द्वितीयपादगे मन्दे यदा तिष्ठति पार्वति ।
तदानन्दपुरं नाशं पृथिव्यामस्थि[1]सङ्कुलम् ॥९८॥

कर्पासं चैव धान्यानि तिलभाण्डमहर्घता ।
तृतीये चरणे देवि यदा याति शनैश्चरः ॥९९॥

अवन्तीपश्चिमे भागे देशे सौराष्ट्रके तथा ।
विनाशं जायते शीघ्रं परचक्रेण सुन्दरि ॥१००॥

रसानां च क्षयं यान्ति कोद्रवो नैव पच्यते[2] ।
मेघो न वर्षते देवि महापुरुषघातकः ॥१०१॥

पादे चतुर्थगे देवि क्षयमुज्जयिनी पुरी ।
प्रजानां च महापीडा दुर्भिक्षं भवति ध्रुवम् ॥१०२॥

गुडं च तैलं लवणं रसानां च महर्घता ।
मेदिनी पच्यते नैव परचक्रागमाकुला ॥१०३॥

द्विमासं नैव वृष्टिः स्यात् राजयुद्धं परस्परम् ।
आर्द्राप्रथमपादे च यदा याति शनैश्चरः ॥१०४॥

कलिङ्गदेशनाशं स्याद्राक्षसोपद्रवेण च ।
क्षुधार्ताः पृथिव्यां सर्वे नान्नं पचति मानवः ॥१०५॥

राजानां जायते युद्धं जनानां च क्षयो भवेत् ।
द्वितीये पादगे मन्दे कलिङ्गे पूर्वभागके ॥१०६॥

---

१. 'पृथिव्यामस्थिसङ्कुलम्' *ह*, अन्यत्र 'पार्थिवामस्थितं कुलम्' ।

२. 'पश्यते' *अ*, अन्यत्र 'पच्यते' ।

देशाः सर्वे विनश्यन्ति देवि सत्यं शृणुष्व मे ।
महाशाली च शाली च कङ्गुमोटं च कोद्रवः ॥१०७॥

चनकामुद्गमाषाश्च यवाश्चा[1]तुलमेव च ।
एतत्सर्वं महर्घानि भवन्ति नात्र संशयः ॥१०८॥

तृतीयचरणे मन्दे दुर्भिक्षं देशकोङ्कणे ।
गुडादि नैव पच्यन्ते धान्यं भवति दुर्लभम्[2] ॥१०९॥

जायते जीवमरणं सत्यमेतत्सुलोचने ।
चतुर्थे चरणे देवि यदा भवति भास्करी ॥११०॥

ललाटं[3] कौङ्कणं चैव तथा देशं समूद्रकम् ।
विनश्यन्ति च ते सर्वे रसं धान्यं महर्घता ॥१११॥

आदित्यप्रथमे पादे यदा याति शनैश्चरः ।
घृतं तैलं रसं धान्यं कर्पासस्य महर्घता ॥११२॥

जायते त्रिगुणो लाभो वर्षान्ते[4] च वरानने ।
विन्ध्यराट्-पुलिन्देषु[5] केदारं नगवासिनम् ॥११३॥

जलहीनांश्च ते देशाः प्रलयं यान्ति सुन्दरि ।
द्वितीयचरणे मन्दे यदा तिष्ठति पार्वति ॥११४॥

द्वीपानां सप्तकं तत्र विनाशं जायते ध्रुवम् ।
कर्पूरं पटसूत्रं च द्राक्षागरु सशर्करा ॥११५॥

---

१. 'तृप्तमेव च नश्यति' अ, अन्यत्र 'यवाश्चातुलमेव च' ।

२. 'नैव च, अ, अन्यत्र 'दुर्लभम्'

३. [लाटं] ।

४. 'वर्षन्ति' अ, अन्यत्र 'वर्षान्ते' ।

५. 'कलिन्देषु' ध, अन्यत्र 'पुलिन्देषु' ।

जातीफलं च हिंगुं च क्षुधादि[1] द्रव्य पार्वति ।
महर्घ्यं जायते देवि लाभश्च त्रिगुणो भवेत् ॥११६॥

तृतीयचरणे मन्दे कान्तीपुरी विनश्यति ।
विविधोपद्रवं देवि तत्र राज्ये न संशयः ॥११७॥

मेदिनी पच्यते नैव माधवो नैव वर्षति ।
नगरे चाशुभं देवि द्वौ मासौ वत्सरौ तथा ॥११८॥

जातो (?) भवति देवेशि सर्वधान्यमहर्घता ।
पुनर्वसु चतुर्थेऽङ्घ्रि यदा याति शनैश्चरः ॥११६॥

अल्लाद्[2] देशे देवेशि द्विमासं नैव वर्षति ।
तथैवाग्निभयं याति विग्रहं नृपपीडनम् ॥१२०॥

तथैवाग्निभयं याति विग्रहं नृपपीडनम् ।
अन्नं महर्घतां याति कङ्गुनीमाषकोद्रवाः ॥१२१॥

महाशाली च शाली च राजिकातुल शर्षपम् ।
जीरकं तुषधान्यानि कर्पासं षणसूत्रकम् ॥१२२॥

नश्यन्ति देव देवेशि त्रिमासान्नात्र संशयः ।
पुष्ये प्रथमपादे तु यदा गच्छति सूर्यजः ॥१२३॥

कलिन्द[3]कालिन्दी देशे कर्पासघृतशर्करा ।
रसाश्च लवणं तैलं गोमहिष्यादिका पुनः ॥१२४॥

---

१. 'व्याघ्रादि' अ, [शुण्ठयादि] ।

२. 'आल्हा' अ, अन्यत्र अल्लाद् ।

३. [पुलिन्द] ।

माघवो वर्षते नैव भवेदग्निभयं प्रिये ।
पादे द्वितीयगे मन्दे सर्वदेशं विनश्यति ॥१२५॥

चनकास्तिलगोधूमं मसूरास्त्रिकुटास्तथा ।
अत्तसीयवकर्पासं पट[1]सूत्रशणादयः ॥१२६॥

एते सर्वे महर्घानि भवन्ति नात्र संशयः ।
पादे तृतीयगे मन्दे दुर्भिक्षं पुरनागरे[2] ॥१२७॥

पादे चतुर्थगे देवि तुण्डदेशे महाभयम् ।
जायते घोर दुर्भिक्षं नृपनाशः प्रजायते ॥१२८॥

प्रजानां च क्षयं याति महापुरुषनाशनात् ।
आश्लेषा प्रथमे पादे गतः सूर्यसुतो यदि ॥१२९॥

तथा विन्ध्यनिवासीनां महाभयमुपस्थितम् ।
द्वितोये पादगे शौरिस्तदाकान्तारवङ्गकौ ॥१३०॥

कौशलं वनआनन्दं पुरदेशं च शृङ्गिनः ।
देवो न वर्षते तत्र कङ्गुकोद्रवसर्षपाः ॥१३१॥

मसूरा माषका देवि कुलत्थं चणकं षणम् ।
त्रिकुटीजीरकं चैव वस्तु एतानि भामिनि ॥१३२॥

यतते च मघा ऋक्षे जायते नात्र संशयः ।
तृतीयांघ्रौ यदा याति शनौ हर्षपुरे भयम् ॥१३३॥

विग्रहं च महाघोरं रसं सर्वमहर्घता ।
सार्प्ये पादचतुर्थे च यदि मन्दगतेर्गतिः ॥१३४॥

---

१. 'कुट' ***ध***, अन्यत्र पट ।
२. [नगरे पुरे] ।
३. 'स्तत्ते' ***अ***, अन्यत्र 'यतते' ।

तदानन्दपुरे देवि जायते च महद्भयम् ।
मघाप्रथमपादे तु यदा याति शनैश्चरः ॥१३५॥

दुर्भिक्षं मालवे देशे राजयुद्धं परस्परम् ।
विविधोपद्रवं याति माधवो नैव वर्षति ॥१३६॥

चतुष्पदस्य मरणं गोधूम-चनका-यवाः ।
मसूरा-त्रिकुटा चैव संग्रहेत्तदनन्तरम् ॥१३७॥

लाभो द्विगुणितो ज्ञेयो निःसन्देहो वरानने ।
द्वितीयचरणे शौरिः यदा तिष्ठति पार्वति ॥१३८॥

तदा तु शणकर्पासं गुडं लवणशर्करा ।
द्राक्षा-मरिचं हिंगु च धान्यादीनां महर्घता ॥१३९॥

तृतीये चरणे शौरिः यदि[1] नश्यति समालवम्[2] ।
महारौद्रं भवेद्देवि दुर्भिक्षं गदपीडनम् ॥१४०॥

तथैवाग्निभयं याति मूषकाः शलभास्तथा ।
कर्पासं लवणं सूत्रं दधिदुग्धमधु तथा ॥१४१॥

घृततैलादिकरसं महर्घं देवि जायते ।
पादे चतुर्थगे देवि यदा याति शनैश्चरः ॥१४२॥

तदा[3] भवतु उज्जयिन्यां दुर्भिक्षं मालवेषु च ।
मानवानां[4] महाव्याधिः मूषका शलभास्तथा ॥१४३॥

तथैवाग्निभयं याति रसं धान्यं महर्घता ।
पूर्वफल्गुन्याद्यपादे यदा संचरते शनिः ॥१४४॥

---

१. 'यदि नश्यति' ***ध***, अन्यत्र 'पारिजातं' ।
२. 'समालवं' ***व***, 'मसालवं' ***स***, अन्यत्र 'ममालवं' ।
३. 'तदा भवेत्' ***ध***, ***स***, 'तदाभवतु' ***व***, अन्यत्र तद्भवतु, [तदा भयं तु] ।
४. 'मालवानां' ***ध***, अन्यत्र 'मानवानां' ।

नृपानां जायते युद्धं प्रजाव्याधिमहाकुलम् ।
द्वितीये चरणे देवि शनियोगे भवन्ति हि ॥१४५॥

मालवोज्जयिन्यां[1] देशे महादुःखं भवन्ति हि ।
तत्र धान्यं न पच्यन्ते माधवो नैव वर्षति ॥१४६॥

नृपाणां विग्रहं याति नराणां व्याधिपीडनम् ।
रसं च शणकर्पासं पटसूत्रं महर्घकम् ॥१४७॥

पादे तृतीयगे देवि यदा याति शनैश्चरः ।
तदा त्वानन्दवाटीषु दुर्भिक्षं भवति ध्रुवम् ॥१४८॥

नाशं चतुष्पदादीनां मर्त्यो[2] विस्फोटपीडितः ।
गजोष्ट्रं नाशयेद्देवि नृपाणां विग्रहो भवेत् ॥१४९॥

तथैवाग्निभयं याति तुलाभाण्डं महर्घता ।
पादे चतुर्थगे देवि रसं धान्यं महर्घता ॥१५०॥

सर्वजन्तून्प्रणश्यन्ति सत्यमेतत्सुलोचने ।
उत्तराप्रथमे पादे यदा याति शनैश्चरः ॥१५१॥

तदा कलिङ्गदेशेषु घृततैलं सशर्करा ।
सर्षपं जीरकर्पासं कुङ्कुमाद्यानि यानि च ॥१५२॥

एतत्सर्वं महर्घाणि सन्देहो नास्ति पार्वति ।
पादे द्वितीयके शौरिर्यदा गच्छति भामिनि ॥१५३॥

मध्यदेशेषु दुर्भिक्षं देवि गङ्गातटेषु च ।
रसं धान्यं क्षयं याति विग्रहः पृथिवीपतेः ॥१५४॥

---

१. 'मालयो०' *अ*, अन्यत्र 'मालवो०' ।
२. 'मासो' *अ*, अन्यत्र 'मर्त्यो' ।

शौरिस्तृतीयचरणे यदा याति वरानने ।
पूर्वदेशे समुद्रस्य गङ्गाया उत्तरे[1] तटे ॥१५५॥

दुर्भिक्षं जायते घोरं नात्र कार्या विचारणा ।
पादे चतुर्थगे मन्दे यदि गच्छति सुन्दरि ॥१५६॥

विन्ध्यादौ कान्यकुब्जेषु न चैवान्नं[2] प्रपच्यते ।
प्रलयं जायते राज्ञां माधवो नैव वर्षति ॥१५७॥

कर्पासं पटसूत्रं च शणलोहं सकाञ्चनम् ।
ताम्ररुप्यादि सर्वाणि महर्घं जायते प्रिये ॥१५८॥

हस्ते प्रथमपादे च यदा गच्छति सूर्यजः ।
कुरुक्षेत्रं विनश्यन्ति चतुष्पद् समन्वितम् ॥१५९॥

द्वितीयेऽङ्घ्रौ यदा शौरिः प्रविशेत्तु वरानने ।
रसं धान्यं जलं तत्र विनश्यन्ति न संशयः ॥१६०॥

पादे तृतीयगे मन्दे सर्ववस्तु विनश्यति ।
जीवानां जन्तवानाञ्च पीडा भवति भूतले ॥१६१॥

चतुर्थचरणे देवि यदा याति शनैश्चरः ।
विजापुरविनाशं च कुरुते नात्र संशयः ॥१६२॥

सर्षपं राजिकाक्षारं संग्रहं तत्र कारयेत् ।
पटं लोहं सुवर्णादि त्रिगुणो लाभजायते । १६३॥

चित्रादिचरणे (?) देवि यदा गच्छति सूर्यजः ।
भवेदग्निभयं देवि यमुनायास्तटे तदा ॥१६४॥

---

१. 'जमुना' *ध*, *स*, अन्यत्र 'उत्तरे' ।

२. 'अन्य' *अ*, अन्यत्र 'अन्नं' ।

द्वितीयचरणे देवि यदा याति शनैश्चरः ।
द्राविडे मागधे देशे सौराष्ट्रे च[1] महद्भयम् ॥१६५॥

महापीडा[2] प्रजायन्ते विप्राणां देशवासिनाम् ।
रसं धान्यं क्षयं यान्ति न[3] च सन्देह पार्वति ॥१६६॥

तृतीयचरणे देवि यदा भवति भास्करः ।
कुरुक्षेत्रेषु दुर्भिक्षं माधवो नैव वर्षति ॥१६७॥

तथैवाग्निभयं याति[4] प्रजापीडा निरन्तरम् ।
परस्परं नरेन्द्राणां युद्धं भवति दारुणम् ॥१६८॥

पादे चतुर्थगे देवि सर्वं नास्तीति कथ्यते ।
स्वात्याद्यचरणे देशे[5] विपदायाति शनैश्चरः ॥१६९॥

रसं पशुं विनश्यन्ति दारुणं हस्तिनापुरे ।
द्वितीयपादगे शौरिर्दुर्भिक्षं भवति प्रिये ॥१७०॥

पादे तृतीयगे देवि सर्वनाशं भविष्यति ।
चतुर्थपादगे सौरि रसं गुडं सशर्करा[6] ॥१७१॥

दधिदुग्धं तथा देवि जायते सुमहर्घता[7] ।
विशाखाप्रथमे पादे यदा गच्छति सूर्यजः ॥१७२॥

---

१. 'प्रनश्यति' ध, अन्यत्र 'च महद्भयम्' ।
२. 'महद्भयं' ध, अन्यत्र 'महापीड़ा' ।
३. 'नात्र' ध, अन्यत्र 'न च' ।
४. 'याति' ध, स, अन्यत्र 'यातं' ।
५. 'देशे विपदा' व, अन्यत्र 'देवि यदा' ।
६. 'सर्षपा' ध, अन्यत्र 'शर्करा' ।
७. 'चमह०' व, स, अन्यत्र 'सुमह० ।

तदा द्वित्रिचतुर्थेषु चरणे यदि भास्करी ।
सोपद्रवं सर्वदेशं तदा देवि प्रजायते ॥१७३॥

अनुराधा चाद्यपादे तु यदा याति शनैश्चरः ।
नान्नं ललाट (?) सौराष्ट्रे पच्यते च[1] महीतले ॥१७४॥

माधवो वर्षते नैव द्वितीयचरणे तथा[2] ।
पादे तृतीयगे देवि यदि सौरिः प्रतिष्ठितम् ॥१७५॥

व्यसनेन तदा राष्ट्रं विनश्यन्ति न संशयः ।
सशालीकोद्रवा देवि कङ्गुनीमुद्गमाषकाः ॥१७६॥

मसूरं तन्दुलं मोटं चनकं[3] च तिलं तथा ।
एते धान्यं महर्घानि जायते च[4] सुरेश्वरि ॥१७७॥

पादे चतुर्थगे सौरे मरुद्देशो विनश्यति ।
न[5] चान्नं पच्यते पृथ्वीं दुर्भिक्षं प्रबलं भवेत् ॥१७८॥

तथैवाग्निभयं याति कर्पासं स[6] न नश्यति ।
ज्येष्ठाप्रथमपादे च यातो यदि शनैश्चरः ॥१७९॥

प्रजानां च भयं तत्र[7] परचक्रेण नश्यति ।
पादे द्वितीयगे देवि यदा भवति भास्करिः ॥१८०॥

---

१. 'मेदिनीतले' ध, अन्यत्र 'च महीतले' ।

२. 'तथा' ध, अन्यत्र 'ततः' ।

३. 'च तिलं' व, अन्यत्र 'वर्त्तुलं' ।

४. 'सुरसुन्दरि' ध, अन्यत्र 'गुरेश्वरि' ।

५. श्लोक सं० १७८ उत्तरार्धात् श्लोक सं० १७९ पूर्वार्द्धं यावत्पाठोऽधिकः अ,

६. [शण्] ।

७. 'नाशं' अ, अन्यत्र 'तत्र' ।

तदा तटे समुद्रस्य दुर्भिक्षाग्निभयं भवेत् ।
जायते च महायुद्धं राजा राज्ञो परस्परम् ॥१८१॥

प्रजानां मरणं चैव गोधूमं चनकं तथा ।
समुद्गमोटवल्लायां जायते च महद्भयम् ॥१८२॥

तृतीये पादगे सौरे सविराट् सोरठं तथा ।
समुद्रस्य तटं सर्वं विनश्यति हि भामिनि ॥१८३॥

रौरवं च महाकष्टं राजयुद्धं परस्परम्[1] ।
तस्करानां भयं याति नात्र सन्देह भामिनि ॥१८४॥

चतुर्थे चरणे देवि स्वदेशे[2] मेदिनी तथा ।
पच्यन्ते नैव धान्यानि तथैवाग्निभयं भवेत् ॥१८५॥

मूलस्य प्रथमे पादे यदा गच्छति सूर्यजः[3] ।
पूर्वदेशेषु दुर्भिक्षं विग्रहं राजविद्रवम् ॥१८६॥

भूमौ बाहुल्यं तस्करानलेः ।
विरोधं भवति राज्ञां विषयोऽपि विनश्यति ॥१८७॥

द्वितीयचरणे देवि देशे गुर्जरिके तथा ।
मेदिन्यां पच्यते नैव दुर्भिक्षं प्रलयं भवेत् ॥१८८॥

जायते विग्रहो राज्ञां माघवो नैव वर्षति ।
नरपीडाग्नितो भयं कर्पासं राजिसर्षपम् ॥१८९॥

---

१. 'परस्परं' ध, 'अन्यत्र' प्रवर्तते ।
२. 'स्वदेशे' ध, 'अन्यत्र' विदेशे ।
३. 'सौरजः' व, अन्यत्र 'सूर्यजः'

मसूरं चनका-मोठात्रिकुटामुद्गमाषकाः ।
कुलत्थादि वलादीनां जायते च महर्घता ॥१६०॥

रसतैलं सलवणं कृष्णजीरं च जीरकम् ।
संग्रहे त्रिगुणो लाभो सत्यमेतत्सुलोचने ॥१६१॥

पादे[1] तृतीयगे मन्दे फलमेतत्सुलोचने ।
चतुर्थचरणे मन्दे तदा धर्मनदीतटे ॥१६२॥

जायते विषयं नाशं सत्यमुक्तं सुसङ्कटे ।
पूर्वा[2]षाढ़प्रथमेऽङ्घ्रौ च भानुजस्य गतिः यदा ॥१६३॥

तदा नागपुरे रौद्रं दुर्भिक्षं जननाशनम् ।
कर्पासं राजिकाक्षुरं सर्षपं वसु धारयेत् ॥१६४॥

त्रिगुणो जायते लाभो मयाख्यातं वरानने ।
पादे द्वितीयगे मन्दे अहिक्षेत्रं स गुर्जरम् ॥१६५॥

कुरुक्षेत्रादिदेशेषु माधवो नैव वर्षति ।
विनश्यन्ति च सौख्यानि जनानां नात्र संशयः ॥१६६॥

पादत्रये चतुर्थेषु सर्वं नास्तीति कथ्यते ।
उत्तराप्रथमे पादे यदा गच्छति भास्करिः ॥१६७॥

हस्तिनापुरसंयुक्तं नगरं पुत्रपाटलिः[४] ।
माधवो वर्षते नैव दुर्भिक्षं बहुलं भवेत् ॥१६८॥

---

१. 'यदि' अ, अन्यत्र 'पादे' ।

२. 'पूर्वायाप्रथमे पादे' ब, स, 'पूर्वायां प्रथमेऽङ्घ्रौ' ध, अन्यत्र पूर्वाषाढ़-प्रथमेऽङ्घ्रौ ।

३. 'पत्रपाटली' ध, पुत्रपाटलिः' ब, अन्यत्र 'पुरपाटलम्' ।

तथा सर्वाणि वस्तूनि संग्रहं कारयेद्बुधः ।
एकत्रिषष्ठमासेषु लाभश्चैव गुणत्रयम् ।।१९९।।

भूमिराजविरोधं च भयं शीतं तथानलः ।
पादे द्वितीयगे शौरेः पुरे मण्डलवेष्टके ।।२००।।

सन्निधे कामरुदेशे विषयं नाशमुच्यते ।
परचक्रं विनाशाय मेदिन्यां नैव पच्यते ।।२०१।।

मानवानां भवेद्व्याधिः वर्षा नैव पतन्ति हि ।
पादे तृतीयगे मन्दे मालवदेशं नश्यति ।।२०२।।

तदा मुद्गतिलादीनि महर्घानि भवन्ति हि ।
पादे चतुर्थगे मन्दे[1] दुर्भिक्षं कामरुपके ।।२०३।।

माधवो वर्षते नैव विषयं नाशमुच्यते ।
महाभयं मनुष्याणां जायते राजविग्रहम् ।।२०४।।

तथैवाग्निभयं याति रसधान्यमहर्घता ।
श्रवणाप्रथमे पादे यदा याति शनैश्चरः ।।२०५।।

देशेषु कामरूपेषु दुर्भिक्षाग्निभयं भवेत् ।
पादे द्वितीयगे देवि फलमेतत्प्रजायते ।।२०६।।

तृतीयचरणे सौरिर्यदि याति महेश्वरि ।
दुर्भिक्षं बहुलं देवि मरुद्देशे[2] भवेत्तदा ।।२०७।।

माघवो वर्षते नैव सशणं[3] लवणं गुडम् ।
सर्वं रसं महेशानि जायते च महर्घता ।।२०८।।

---

१. 'मन्दे' ध, अन्यत्र 'देवि' ।
२. 'कामरुपे' ध, अन्यत्र 'मरुद्देशे' ।
३. 'वसनं' व, अन्यत्र 'सशणं' ।

श्रवणस्य चतुर्थांशे धनिष्ठार्धसमन्वितम् ।
छनि[1] नास्तीति कथ्यन्ते सत्यमेतद्वरानने ॥२०९॥

धनिष्ठायां यदा शौरिर्तृचतुष्पाद संस्थितः ।
याते चैव सुरेशानि फलमुक्तं तु पार्वति ॥२१०॥

देशे कनकपुरे रम्ये तथैव कान्यकुब्जके ।
मेदिन्यां पच्यते नैव माधवो नैव वर्षति ॥२११॥

दुर्भिक्षं जायते घोरं रौरवं कालभामिनि ।
वरुणप्रथमे पादे यदा भवति भास्करिः ॥२१२॥

तदा कष्टं मरुद्देशे माधवो नैव वर्षति ।
मेदिन्यां पच्यते नैव राजयुद्धं परस्परम् ॥२१३॥

दुर्भिक्षं विषमं रौद्रं प्रजानाशं भयं भवेत् ।
पादे द्वितीयगे सौरिः मध्यदेशे सपूर्वके ॥२१४॥

मेदिन्यां पच्यते नैव राजयुद्धं परस्परम् ।
धान्यादीनां रसादीनां महर्घ्यं जायते ध्रुवम्[2] ॥२१५॥

पादे तृतीयगे मन्दे राजविग्रहभाषितम् ।
दुर्भिक्षं रसनाशश्च विषयेषु प्रणश्यति ॥२१६॥

पादान्ते शतभे मन्दे पूर्वाभाद्रपदात्रये ।
यावत्समफलं सर्वं कथ्यते शुभलोचने ॥२१७॥

---

१. 'छिति' *ध*, अन्यत्र छनि [क्षतिः]

२. 'प्रिये' *ध*, अन्यत्र 'ध्रुवम्' ।

पूर्वाभाद्रपदे मन्दे जायते चतुरंङ्घ्रिभिः ।
तदा मेरोरधः पृथ्वी जननाशं प्रजायते ॥२१८॥

मनुष्ये रोगबाहुल्यं शिवस्य वचनं यथा ।
उत्तराप्रथमे पादे यदा मन्दो व्रजन्ति हि ॥२१९॥

तदा मेरुतटे देवि हिमाचलसमीपगे ।
दुर्भिक्षं जायते रौद्रं द्वितीयेषु च तत्फलम् ॥२२०॥

तथा चैव तृतीयेऽङ्घ्रि फलं तुल्यं विनिर्दिशेत् ।
पादे चतुर्थगे मन्दे देशे सौराष्ट्रगे तथा ॥२२१॥

दुर्भिक्षं जायते देवि नान्नं पृथ्वीं पचन्ति हि ।
माधवो वर्षते नैव विषयं नाशमादिशेत् ॥२२२॥

गजोष्ट्रमहिषीगावो गर्द्दभपक्षिजातिकम् ।
म्रीयन्ते जन्तवः सर्वे सत्यमेतत्सुरेश्वरि । २२३॥

रेवतीप्रथमेपादे सूर्यजो यदि तिष्ठति ।
तदा नदीतटे द्वन्द्वे दुर्भिक्षं कालरौरवम् ॥२२४॥

द्वितीयचरणे [देवि] रेवत्यां यदि तिष्ठति ।
तदा गोदावरी द्वन्द्वे तटे दुर्भिक्षकं भवेत् ॥२२५॥

नान्नं पचति मेदिन्यां श्रृणु मद्वचनं प्रिये ।
तृतीयचरणे सौरिर्यदि तिष्ठति पार्वति ॥२२६॥

विन्ध्याद्रिपूर्वभागेषु विषयं प्रविनश्यति ।
मूषकस्य भयं याति काव्यकृत्पीडनं भवेत् ॥२२७॥

तथा कलाकृतं चैव नट् नाट्यकृतं तथा ।
पादे चतुर्थगे सौरिः पृथ्वी नान्नं पचन्ति हि ॥२२८॥

माधवो वर्षते नैव रौरवं[1] काल जायते ।
तथैवाग्निभयं याति रसं धान्यं महर्घता ॥२२६॥

इति श्रीरुद्रयामले सारोद्धारे उमामहेश्वरसम्वादे मेघमालायां शनैश्चरस्य त्रिधाफलाध्यायः ॥४॥

१. 'रौरवाकाल' ध, अन्यत्र 'रौरव' ।

# पञ्चमोऽध्यायः

## राशिगतग्रहफलाध्यायः

### पार्वत्युवाच

त्रिकालज्ञं महेशत्वं कथ्यतां राशिराशिगम् ।
ग्रहराशिफलं योगं त्रिधोत्पातफलं प्रभो ॥१॥

### ईश्वर उवाच

एकऋक्षगतावेतौ एकराशियुता यदि ।
रविरङ्गारकौ वक्री शनैश्चरवृहस्पती ॥२॥

पीडयन्ति मही नित्यं व्याधिदुर्भिक्ष तस्करैः[1] ।
हाहाभूतं महाघोरं नृपपीडा प्रजायते ॥३॥

एकराशिगतावेतौ यदा राहुशनैश्चरौ ।
एष कर्त्तरियोगश्च भाषितः मुनिपुङ्गवैः ॥४॥

एक[2]समसप्तमैव शनिराहू यदा तदा ।
महामारी भयं याति राजयुद्धं परस्परम् ॥५॥

---

१. 'संस्करैः' *अ*, अन्यत्र 'तस्करैः' ।
२. [एकराशौ सप्तमे वा] ।

यदि सौरिबृहस्पति-भूमिसुता,
उदयन्ति क्रमोत्क्रमराशिगता ।
धनधान्यहिरण्यं[1] पीडकरा,
क्षययान्ति महीपतिक्षत्रधराः ॥६॥

गुरुक्षेत्रे गते सौरे गुरुस्तत्रैव संस्थिते ।
पादशेषं[2] भवेत्पृथ्वी मांसश्रोणितकर्दभाः ॥७॥

मूले[3] च गलिता वृष्टिर्दुर्भिक्षंगुणसंभवम् ।
प्रजाव्याधिन्तदा रोगं सर्वंशस्यं प्रणश्यति ॥८॥

राजोपद्रवपीडा स्यादनावृष्टिस्तथा भवेत ।
एते मूले भवेद्दोषाः वैदर्भस्य[4] फलन्त्विदम् ॥९॥

मीनस्थे भास्करिर्यत्र मृगास्ये गुरु तिष्ठति ।
वृषराशौ धरासूनुरन्नं भवति दुर्लभम् ॥१०॥

मघामूलेषु रोहिण्यां रेवती वादिती गुरौ ।
षड् ऋक्षे शनौ प्राप्ते दुर्भिक्षं जायते ध्रुवम् ॥११॥

भूमिकम्पोऽथनिर्घातं पतन्ति जलविन्दवः ।
आकाशात्पतितं दृष्ट्वा परिवेशेन्दुसूर्ययोः[5] ॥१२॥

परिघश्चाथवज्रश्च धूम्रकेतुश्च मार्जनी ।
एतेषां दर्शनं देवि जायते च महद्भयम् ॥१३॥

---

१. 'हिरण्यविनाशकरा' व, अन्यत्र 'हिरण्यं पीडकरा ।
२. 'पाद' व, अन्यत्र यदा ।
३. 'मूले च गलिता वृष्टिः' ध, अन्यत्र 'मूले वृष्टिश्च दुर्भिक्षं' ।
४. ,वैष्णवस्य' ध, वैप्लवस्य' व, अन्यत्र 'वैदर्भस्य' ।
५ 'सूर्यजः' व, अन्यत्र 'सूर्ययोः' ।

सर्वमासे पूर्णमास्यां भूमिकम्पो यदा भवेत् ।
उल्कातारा वज्रपातः परिधिः[1] शशिसूर्ययोः[2] ॥१४॥

धूम्रकेतुः शक्रचापः ग्रहणं[3] बहुधा तथा[4] ।
तथैव सर्ववस्तूनां जायते च महर्घता ॥१५॥

संग्रहेत् सर्वधान्यानि प्रयत्नेन तु पार्वति ।
मासेषु पञ्चमे तत्र लाभस्तु द्विगुणो भवेत् ॥१६॥

तारकापतनं यत्र गर्जिता विद्युता[5] युता ।
वर्षाकाले तदा क्षिद्रं शिवस्य वचनं यथा ॥१७॥

अति[6]चारगता सौम्या क्रूरावक्रव्यवस्थिता ।
दुर्भिक्षं राष्ट्रभङ्गं च महामारी प्रवर्तते ॥१८॥

अतिवातमवातं च अत्युष्मं च निरुष्मता ।
अत्यभ्रं च निरभ्रं शीघ्रं[7] वर्षति माधवः ॥१९॥

यदा भौमश्च चन्द्रश्च देवतानां पुरोहितः ।
एकराशिप्रपीड्यन्ते तदा कृतयुगं भवेत् ॥२०॥

वृषराशौ गते शुक्रे रविभौमशनैश्चराः ।
विराटभीरके देशे माधवो नैव वर्षति ॥२१॥

---

१. 'परिधं' *ध*, अन्यत्र 'परिघः' ।
२. 'सूर्यजः' *ध*, अन्यत्र 'सूर्ययोः' ।
३. 'ग्रहाणां' *अ*, अन्यत्र 'ग्रहणं' ।
४. यदा *व*, अन्यत्र तथा ।
५. वियुता *ध*, अन्यत्र विद्युता ।
६. अतिचारे गते सौम्ये क्रूरे वक्रत्वमागते *व* ।
७. 'शीर्षं' *व*, अन्यत्र 'शीघ्रं' ।

जायते प्रलयाकारो मेदिन्यान्नं[1] न पच्यते ।
क्षयं याति रसं धान्यं राजयुद्धं परस्परम् ।।२२।।

रविसौरिर्यदा[2] देवि वृषराशिप्रतिष्ठितम् ।
मृत्युश्चैव नरेन्द्राणां धान्यानां च क्षयो[3] भवेत् ।।२३।।

कर्पासादि महर्घ्यं स्यादग्निदाहः प्रजायते ।
तदा शुक्रास्तसमये चतुष्पद् विनश्यति ।।२४।।

कन्यामीनालिसिंहे धनुवृषमिथुने वक्रगे मन्दभौमे ।
पृथ्वीं संक्रूद्धभूपं क्षितिपतिदलितं विग्रहं चातिघोरं ।।२५।।

दुर्भिक्षं शस्यनाशं जनपदमरणं चातिलोक[4]-प्रकम्पम्[5] ।
चक्रारुढं समस्तं भ्रमयति[6] दशदिशो[7] मीनसंस्थेऽर्कपुत्रे ।।२६।।

सूर्य[8]भौमस्तथा सौरिरेकत्र यदि तिष्ठति ।
तदा तु युवतीराज्ये देशे चैव कलिङ्गके ।।२७।।

दुर्भिक्षं राष्ट्रभङ्गं स्याद्रौरवाकाल जायते ।
तथैवाग्निभयं घोरं श्वेतं चास्थि महीतले[9] ।।२८।।

---

१. 'न्यानान्नं' अ, अन्यत्र 'मेदिन्यान्नं' ।
२. 'सोरः' अ, अन्यत्र 'सौरिः' ।
३. 'महर्घता' द, अन्यत्र 'क्षयो भवेत्' ।
४. 'जाति' द, अन्यत्र 'चाति' ।
५. 'प्रकम्पं' द, अन्यत्र 'प्रकोपं' ।
६. 'भ्रमति' व, अन्यत्र 'भ्रमयति' ।
७. 'दशांदशा' अ, अन्यत्र 'दशदिशो' ।
८. श्लोक० सं० २६ अभावः व ।
९. 'महीयते' अ, स, अन्यत्र 'महीतले' ।

स्व[1]ल्पोदकास्तथा धात्री रसं धान्यं क्षयो भवेत् ।
शुक्रो भानुश्च मन्दश्च यदा मेषे प्रतिष्ठितः ।।२९।।

चनकं यवगोधूमं कोद्रवं कंगुशालिभिः ।
दधिदुग्धादिकं देवि जायते च महर्घता ।।३०।।

गुरौ भौमस्य संयोगो यदा देवि प्रवर्तते ।
मिथुनेषु[2] यदा याति जननाशस्तदा नृपः ।।३१।।

भृगुभौमश्च शौरिश्च कर्कटे यदि तिष्ठति ।
विराटे लाटके देशे सर्वनाशः प्रजायते ।।३२।।

यदा शुक्रश्च भौमश्च रविराहुशनैश्चराः ।
एते त्वेकत्रगे देवि जायते च महद्भयम् ।।३३।।

सप्तद्वीपेषु पीडा स्यान्नान्नं पचति भूतले ।
गजाश्वमहिषी गावो मानुषस्य क्षयं तदा ।।३४।।

क्षत्रभङ्गं भवेद्देवि चतुर्दिक्षु प्रपीडनम् ।
माधवो वर्षते नैव श्वेतास्थि च महीतले ।।३५।।

परस्परहतं द्रव्यमग्निचौर[3] भयं भवेत् ।
सार्द्धं च पञ्चमासेषु यावद्भवति भामिनि ।।३६।।

रव्यादौ[4] शनिपर्यन्तं क्रूराक्रूर-व्यवस्थिताः ।
एकराशिगतो यत्र गोलकं योग जायते ।।३७।।

---

१. 'स्वन्यो०' ***अ***, अन्यत्र 'स्वल्पो०' ।

२. [मिथुने तु] ।

३. 'तस्करजं भयम' ***घ***, अन्यत्र 'चौर भयं भवेत्' ।

४. 'कं योगजायते' ***घ***, अन्यत्र 'यावद्भवति मामिनि'

पीडयन्ति महीं सर्वां तदा भूमिचलं भवेत् ।
देवता पतनं याति पीडितं शेषमण्डलम् ॥३८॥

अवर्षणं छत्रभङ्गं महामारी तदा भवेत् ।
दुर्भिक्षं रौरवाकालं जायते सर्वमेदिनी ॥३९॥

राज्ञां नाशः प्रजायन्ते सैन्ययोरुभयोरपि ।
अग्निदाहो जन्तुपीडा तथा द्विपच्चतुष्पदम् ॥४०॥

जायते नात्र सन्देहो शिवस्य वचनं यथा ।
अतिवृष्टिरनावृष्टिमूषकाः शलभाः शुकाः[2] ॥४१॥

स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः ।
अकालेऽपि फलं पुष्पं वृक्षाणां यत्र जायते ॥४२॥

स्वजातिमांसं भक्षन्ति दुर्भिक्षं तत्र रौरवम् ।
इति[3] विपर्ययं यत्र दुर्भिक्षं मण्डले भवेत् ॥४३॥

भूमिकम्पो रजः[4] पातो रक्तवृष्टिस्तु जायते ।
देशध्वंसो प्रजापीडा मृत्युपरवधस्तथा ॥४४॥

परचक्रागमं तत्र दुर्भिक्षं च सराजके[5] ।
अतिचारगते शुक्रे देवेज्ये चन्द्रजे तथा ॥४५॥

---

१. [रव्यादेः] श्लोक सं० ३७ अभावः ध ।

२. 'खगाः' ध, ख अन्यत्र 'शुकाः' ।

३. 'रितो' ध, अन्यत्र 'इति' ।

४. 'राज.' अ, अन्यत्र 'रजः' ।

५. 'सराजके' ध, अन्यत्र 'स्वराजके' ।

वक्रगे मन्दभौमे च भयं रोगं तदा भवेत् ।
अतिवातमवातं च अत्युष्मं च निरुष्मता ॥४६॥

अत्यभ्रं च निरभ्रं वा शीघ्रं वर्षति माधवः ।
..................माधवगर्जितं च
स्त्रियाश्चरित्रं भवितव्यता च ।

अवर्षणं वाप्यतिवर्षणञ्च
दैवो न जानाति कुतो मनुष्यः ॥४७॥

इति श्रीरुद्रयामले सारोद्धारे उमामहेश्वरसम्वादे मेघमालायां राशिगतग्रहफलाध्यायः पञ्चमः ॥५॥

## षष्ठोऽध्यायः

### अथ संक्रान्तिफलम्

### [ रविचन्द्रसंयोगसंक्रान्तिफलम् ]

**ईश्वर उवाच**

मेषराशिगते सूर्ये तुलायां रजनीचरः[1] ।
वर्षणं जायते स्वल्पं सर्वधान्यमहर्घता ॥१॥

वृषराशिगते सूर्ये वृश्चिके यदि चन्द्रमा ।
धान्यानां संग्रहः कार्यः मासयुग्मं तु रक्षयेत् ॥२॥

लाभस्तु द्विगुणो देवि तृतीये हानिमादिशेत् ।
मिथुने तु रवौ यत्र धनुर्धरगतः[2] शशी ॥३॥

संग्रहेत् सर्वधान्यानि मासमेकं तु रक्षयेत् ।
लाभे द्विगुणता ज्ञेया द्विमासे हानिरुच्यते ॥४॥

---

१. धं विहाय सर्वत्र 'चरः' ।

२. धं विहाय सर्वत्र तथा ।

कर्कटे पद्मिनीनाथे मृगास्योपगतः शशी ।
धान्यानां संग्रहः कार्यः मासषट्कं[1] तु रक्षयेत् ।।५।।

लाभो द्विगुणतो ज्ञेयो सप्तमे हानि जायते ।
सिंहराशौ दिवानाथे कुम्भस्थे च निशापतिः ।।६।।

पञ्चमासं भवेद्यावत् सर्वधान्यानि संग्रहेत् ।
लाभे द्विगुणता ज्ञेया षष्ठे मासे न लाभदा ।।७।।

कन्याराशौ गतः सूर्यो द्वादशे च निशाकरः ।
धान्यानां संग्रहं कार्यं मासचत्वारि रक्षयेत् ।।८।।

लाभे द्विगुणता ज्ञेया पञ्चमे हानिमासके ।
तुलायां भास्करो गच्छेन्मेषस्थो यदि चन्द्रमा ।।९।।

मासत्रयेण देवेशि त्रिगुणो लाभ उच्यते ।
वृश्चिकेऽर्कः वृषे चन्द्रः धान्याहां संग्रहं चरेत् ।।१०।।

द्वितीये मासि देवेशि द्विगुणो लाभ जायते ।
धनुर्धरगतो भानुश्चन्द्रमा मन्मथे स्थितः ।।११।।

संग्रहेत्सर्वधान्यानि मासमेकं तु रक्षयेत् ।
द्विगुणो जायते लाभो द्वितीये न हि लाभदः ।।१२।।

मृगस्थे[2] संक्रमे भानौ कर्कटस्थे[3] निशाकरे ।
धान्यानां संग्रहः कार्यः मासषट्कं तु रक्षयेत् ।।१३।।

---

१. धं विहाय सर्वत्र 'षट्कं' ।

२. [मृगास्ये] ।

३. [कर्कास्ये] ।

लाभो द्विगुणसंप्रोक्तः सप्तमे मासि हानिदः ।
घटे रवौ हरिश्चन्द्रो[1] सर्वधान्यानि संग्रहेत् ॥१४॥

रक्षयेत् पञ्चमासं तु द्विगुणो लाभ उच्यते ।
मीने च भास्करो देवि षष्ठराशौ निशाकरः ॥१५॥

धान्यानां लाभदो ज्ञेयो चतुर्थे मासि पार्वति ।
पञ्चमे हानिदः प्रोक्तः मया ख्यातं सुरेश्वरि ॥१६॥

## अन्यत्संक्रान्तिफलम्

### [ वारगतसंक्रान्तिफलम् ]

पौषमासस्य संक्रान्तिः रविवारे यदा भवेत ।
द्विगुणं[2] धान्यमूल्यं च कथितं मुनिपुङ्गवैः ॥१७॥

त्रिगुणं४ चन्द्रसम्प्रोक्तं भौमे प्रोक्तं चतुर्गुणम् ।
तुल्यं च बुधशुक्राभ्यां मूल्यार्धं गुरुसोमयोः ॥१८॥

शनिभानुकुजे वारे यदा संक्रान्ति (?) जायते ।
महर्घमतुलं रौद्रं कुरुते राज्यविद्रवम्[3] ॥१९॥

वारेष्वर्कार्किभौमानां संक्रान्तिमृगकर्कटे ।
यदा तदा महर्घं स्यादीतिभीत्यादिकेन च ॥२०॥

## तत्र ग्रन्थान्तरे संक्रान्तिविचारफलम्

संक्रान्तिरादित्यदिने समेतं करोति युद्धं नृपतिर्निजातम्[4] ।
धान्यं महर्घं ह्यतिरोगवातं प्रजा भवेद्दुःखितदैवहीनः ॥२१॥

---

१. [हरी चन्द्रे] ।
२. 'शनौ त्रिगुण' ध, स ।
३. 'विपद्रवं' स, विग्रहं ध, अन्यत्र विद्रवम् [वप्लवम्] [विद्रवम्] ।
४. [नितान्तम्] ।

सोमे यदा संक्रमते च भानुर्महोत्सवं सर्वजनेषु नित्यम् ।
प्रशाम्यते व्याधिभयं नराणां गृहे-गृहे शोभनमङ्गलानि ॥२२॥

भौमे यदा संक्रमते दिनेशस्तदा महर्घ्यं कुरुते पृथिव्याम् ।
लवणतिलास्तैलरसा महर्घ्यं कर्पूरभाण्डादि मितानि चैव ॥२३॥

बुधे यदा संक्रमते दिनेशः मन्दं[1] च वस्त्रादि भवेच्च धान्यम् ।
सौख्यानि लोके समता कुलानां[2] वृक्षाकुला चेदतिमन्दवृष्टिः ॥२४॥

गुरौ यदा संक्रमते च भानुः.
पृथ्वी तदा पूजितलोकमान्यः ।
यजन्ति विप्रा बहुचाग्निहोत्रं,
महोत्सवं सर्वजनेषु वर्तते ॥२५॥

भृगौ दिने भास्करसंक्रमेण,
सर्वाणि वस्त्राणि भवेच्च धान्यम् ।
असौख्यलोके भयव्याकुलश्च,
रसं तिलास्तैलमहो महर्घम् ॥२६॥

सौरे यदा संक्रमते दिनेशः दुर्भिक्ष सर्वं[3] च भवेथ धान्यम् ।
तिलं च तैलं रस[4]रल्पकानि महर्घं[5] भवेत्कष्टजनेषु सर्वम् ॥२७॥

## संक्रान्तिजन्यवृष्टिफलम्

मीने मेषे च कन्यायां कर्कटे च तथा शृणु ।
संक्रान्तिर्देवि वर्षन्ति तदह्नि विजयी भवेत् ॥२८॥

---

१. 'मन्दे च वस्त्रादि' ध, 'मन्दं च वस्त्रादि' व, 'परञ्च वस्तादि' स, अन्यत्र 'मदश्चवरस्त्रादि' ।
२. 'कुलानां' ध, अन्यत्र 'कुलीना' ।
३. [सर्वत्र भवेद्धरित्र्या] ।
४. [?] ।
५. [भवेन्महर्घ्यं च जनेषु कष्टम्] ।

राज्ञां चाथ द्वितीयेऽह्नि शस्यमुक्तं[1] वरानने ।
तृतीयेऽह्नि सुभिक्षं स्यात् चतुर्थे चैव मिश्रतः ॥२६॥

चौराग्निः पञ्चमे विन्द्यात् षष्ठेऽह्नि विजयी भवेत् ।
सप्तमेऽह्नियंदा देवि नैव वर्षेत्कदाचन ॥३०॥

प्रजाव्याधिस्तथारोग्यं सुभिक्षं कथ्यते तदा ।
सर्वोपद्रवनाशाय[2] सप्तमेऽह्नि[3] प्रवर्षणम्[4] ॥३१॥

सिंहे भिन्ने कुतो वृष्टिरथवा वृष्टिनिरन्तरम् ।
वर्षा[5]यणो यदा भिन्नस्तदा वृष्टिर्न जायते ॥३२॥

**इति श्रीरुद्रयामले सारोद्धारे उमामहेश्वरसम्वादे मेघमालायां संक्रान्तिफलाध्यायः षष्ठः ॥६॥**

---

१. 'उत्पत्तिमुत्तमम्' *अ*, अन्यत्र उक्तं 'वरानने' ।
२. 'नाशस्य' *अ*, अन्यत्र 'नाशाय' ।
३. 'सप्तमे च' *अ*, अन्यत्र 'सप्तमेह्नि' ।
४. प्रवर्षणम् *व*, *स*, अन्यत्र 'प्रचक्षणम्' ।
५. 'पञ्चायन' *द*, 'पषायण' *व* अन्यत्र 'वर्षायणो' [?]

## सप्तमोऽध्यायः

### [ चन्द्रोदयफलम् ]

उदयास्ते किं फलं स्याद् ग्रहाणां[1] ब्रूहि शङ्कर ।
तदहं श्रोतुमिच्छामि भग[2]वंस्त्वत्प्रसादतः ।।१।।

ईश्वर उवाच

अथ वक्ष्याम्यहं देवि अजां द्वादशराशिजम् ।
चन्द्रदीनां फलं सम्यक् शृणु यत्नेन भामिनि[3] ।।२।।

यदा मेषोदयश्चन्द्रो[4] तुषधान्यमहर्घता ।
वृषे च तिलमाषाणां ? दुर्लभं जायते प्रिये ।।३।।

मिथुनस्योदये चन्द्रे जायते सर्वशोभनम् ।
अनावृष्टिश्च कर्के स्यात् क्षयं सिंहे चतुष्पदाम् ।।४।।

कन्यायामुदिते चन्द्रे पीडा स्याद् गोद्विजस्य च ।
तुलायां तुषभाण्डादि महर्घं जायते ध्रुवम् ।।५।।

---

१. 'रस्याग्रहणं' *अ*, अन्यत्र 'स्याद्ग्रहाणां' ।
२. 'भावत्वत्प्रसादत.' *अ*, अन्यत्र 'भगवंस्त्वत्प्रसादतः' ।
३. 'पार्वति' *ध*, अन्यत्र 'भामिनि' ।
४. [यदा चन्द्रोदयो मेषे] ।
५. 'तुल' *ध*, अन्यत्र 'तुष' ।

वृश्चिके सर्वसस्यानां निष्पत्तिर्बहु जायते ।
धनौ सुभिक्षं देवेशि मकरे शुभदं भवेत् ॥६॥

कुम्भस्योदये चन्द्रे द्विदलं माष नश्यति ।
मीने सुभिक्षं देवेशि सर्वशस्यानि[1] जायते ॥७॥

[ शुक्रोदयफलम् ]

आश्विने सर्वसम्पत्तिः शुभं कार्तिकमार्गयो. ।
पौषे चैव तथा माघे क्षत्र[2]भङ्गः प्रजायते ॥८॥

अर्घ[3]वृष्टिः फाल्गुने स्याच्चैत्रे च तरुसम्पदः ।
वैशाखे विग्रहो राज्ञां ज्येष्ठे वृष्टिश्च जायते ॥९॥

आषाढ़े चोदिते शुक्रे जलं भवति दुर्लभम् ।
श्रावणे च पशोः पीडा भाद्रे धान्यसमृद्धयः ॥१०॥

[ शुक्रास्तफलम् ]

मेषराशौ यदा देवि शुक्रस्यास्तं प्रजायते ।
रसं धान्यं क्षयं यान्ति चतुरंघ्रि[4]वृषेषु च ॥११॥

मिथुने वर्षते देवि कर्कटे जनपीडनम् ।
सिंहे च जायते चास्तो भृगुपुत्रो यदा प्रिये ॥१२॥

चतुष्पदं तथा धान्यं नश्यते शस्यपीडनम् ।
कन्यायां च वणिक्पीडा तुलायां राजपीडनम् ॥१३॥

---

१. [सर्वशस्यं प्रजायते] ।
२. 'क्षत्रभङ्गस्तथा भवेत' *अ*, अन्यत्र 'क्षत्रभङ्गः प्रजायते' ।
३. [अर्घवृद्धिः] ।
४. [वृषे पीडा चतुष्पदाम्] ।

दुर्भिक्षं वृश्चिके चान्नं दुर्भिक्षं धनुषि भवेत् ।
मकरे च गते[1] चास्ते धान्यानां च क्षयं तदा ।।१४।।

कुम्भे चास्तं यदा याति भृगुपुत्रः सुरेश्वरि ।
तदा पीडा ब्राह्मणस्य मयाख्यातं शृणुष्व तत् ।।१५।।

मीनराशौ भृगुसुतो यदा चास्तमुपागतः ।
सुभिक्षं क्षेममारोग्यं वृष्टिर्भवति भूयसी ।।१६।।

## [ शनेरस्तफलम् ]

मेषं[2] प्रति गते देवि शनिरस्तं व्रजन्ति हि ।
तदा च सर्वधान्यानां निष्पत्तिर्जायते ध्रुवम् ।।१७।।

वृषभे चास्तगे शौरे चतुष्पद् विनश्यति ।
मिथुने मन्दगे चास्तं तदा सद्वर्षणं भवेत् ।।१८।।

तथा वणिक्जने पीडा कर्के धान्यमहर्घता ।
तथा चतुष्पदे पीडा सिंहे चैतत्फलं भवेत् ।।१९।।

कन्यायां धान्यदुर्भिक्षं प्रजापीडा प्रजायते ।
तुलायां शस्यबाहुल्यं जनानां सौख्यदो भवेत् ।।२०।।

वृश्चिके धान्यनाशं च जलं स्वल्पं प्रजायते ।
धनुषे[3] मन्दगे चास्ते अन्नं भवति दुर्लभम् ।।२१।।

---

१. 'गतेश्चार्दो' ***अ***, अन्यत्र 'गतेश्चास्ते' ।

२. 'यदा मेषे गते' ***ध***, ***स***, अन्यत्र 'मेषं प्रति गते' ।

३. [धनुषि] ।

मकरे च पशोः[1] पीडा रसधान्यमहर्घता ।
स्त्रीनराणां[2] देवेशि कष्टं[3] भवति निश्चितम्[4] ॥२२॥

कुम्भे[5] मन्दगे चास्ते चतुष्पद् विनश्यति ।
मीने[6] च जायते चास्तं शनौ सुभिक्षकृद्भवेत् ॥२३॥

माधवो वर्षते देवि पूर्णशस्या च मेदिनी ।
फलन्ति सर्ववृक्षाणि महोत्सवं प्रवर्तते ॥२४॥

आषाढ़मासे यदि शुक्लपक्षे सोमस्य पुत्रोऽभ्युदयं करोति ।
अस्तं च शुक्रे यदि याति भाद्रे अन्यं सुवर्णं च समानतुल्यम् ॥२५॥

इति श्रीरुद्रयामले सारोद्धारे उमामहेश्वरसंवादे मेघमालायां
ग्रहोदयास्तफलाध्यायः सप्तमः ॥७॥

---

१. 'पशोः' *ध*, *स*, अस्तगे' *व*, अन्यत्र 'जने' ।
२. 'स्त्रीणां नराणां' *ध*, अन्यत्र 'स्त्रीनराणां' ।
३. 'पीड़ा' *ध*, अन्यत्र 'कष्टं' ।
४. 'निश्चितम्' *ध*, अन्यत्र निश्चयम्' ।
५. 'कुम्भं' *ध*, अन्यत्र 'घटस्थे' ।
६. 'मीनोप० *अ*, अन्यत्र 'मीनेषु' ।

# अष्टमोऽध्यायः

## पार्वत्युवाच

### मासस्वरुपवृष्टिलक्षणम्

मासि मासि कथं देव ! कीदृशं गर्भलक्षणम् ।
कि[1] वातं कि धनं युक्तं कस्य[2] काले न वर्षति ।।१।।

ईश्वर उवाच

**[ कार्तिकमासफलम् ]**

शृणु देवि परं गुह्यं पूर्वोक्तं नारदं प्रति ।
कार्तिकादिषु मासेषु यादृशं वृष्टिलक्षणम् ।।२।।

स्यात्कार्तिके पुष्पवती च मार्गे,
स्नानं[3] मतो पौष तुषारवातम् ।
माघे तु नित्यं घनमण्डितां च,
स्यात्फाल्गुने चाम्बुफलान्वितं शुभम् ।।३।।

---

१. [किं वातं विघ्नसंयुक्तं] ।
२. [कस्मिन्] ।
३. अयं पाठः *अ*, *ध*, मातृकायामेव, [स्नानं च पौषे हि तुषारवातं] ।

चैत्रे चित्रयोरिष्टं वैशाखे पञ्चरुपिणम् ।
ज्येष्ठे मासे तदा नूनं बहुधर्मान्वितं शुभम् ॥४॥

आकाशे पञ्चवर्णानि श्वेतादिपञ्चरुपिणम् ।
मासाष्टकनिमित्तेन चतुष्टयमभीष्टदम् ॥५॥

द्वादश्यां कार्तिके मासे शुक्लायां रजनी यदा ।
सकला निर्मलानां च पुष्पवन्धं भवेत्तदा ॥६॥

अथवा भरणी ऋक्षं यदि स्यात् पूर्णिमा दिने ।
कुत्रचित्तु भवेद्वृष्टिः कुत्रचित् स्यादवर्षणम् ॥७॥

कार्तिकी पौर्णमास्यां चेत्[1] पूर्णा कृत्तिकया युता ।
सर्वसस्यसमुत्पन्नं निर्वैरा धरणी भवेत् ॥८॥

प्रजापत्यं भवेदृक्षं सम्पूर्णे पूर्णिमादिने ।
तदा स्यात् समता[2] ज्ञेया दुर्भिक्षमसमञ्जसम् ॥९॥

**ईश्वर उवाच**

पुष्पवन्धं प्रवक्ष्यामि शृणु तत्त्वेन भामिनि ।
कार्तिकी पौर्णमास्यां तु रहस्यं[3] कृत्तिका यदा ॥१०॥

पुष्पवन्धं समादिष्टं चतुर्मासेषु वर्षणम् ।
सुभिक्षं क्षेममारोग्यं शस्य निष्पत्तिरेव च ॥११॥

अर्थे[4] दुराननं देवि याम्यऋक्षेण संयुतम् ।
रोगं दीर्घमनावृष्टिं खण्डखण्डे सुवर्षणम् ॥१२॥

---

१. 'च' अन्यत्र अ, चेत् ।
२. [सर्वसन्तापो] ।
३. [नक्षत्रं] ।
४. 'अथेन्दुराननं' अ, अन्यत्र 'अर्थे दुरानने' ।

सन्तापो विविधाकार उत्पातो विविधस्तथा ।
राजानश्च तथा देवि युध्यन्ते च परस्परम् ॥१३॥

अथवा रोहिणी ऋक्षं वर्त्तते तद्दिने प्रिये ।
द्विपच्चतुष्पदे देवि तथाभूतं प्रणश्यति ॥१४॥

अथ[1]वाश्विनी च देवेशि यदि स्यात् पूर्णिमादिने ।
मध्यमं जायते शस्यं मेघं वर्षति मध्यमम् ॥१५॥

कार्तिके मार्गशीर्षे वा संक्रान्तौ यदि वर्षति ।
मध्यमं जायते शस्यं सुभिक्षं पौष वर्षते[2] ॥१६॥

दीपोत्सवे दिने वारौ भौमार्की न शुभप्रदौ ।
संक्रान्त्येर्घ[3]वृद्धिः स्यात् शुभमर्केण भौमगे ॥१७॥

गर्जिते[4] कार्त्तिके मासे चतुर्मासेषु वर्षते[5] ।
सुभिक्षं जायते तत्र सस्य सम्पत्तिरुत्तमा ॥१८॥

सर्ववर्णास्तथा मेघा जायन्ते च पृथक्-पृथक् ।
कार्तिके चैव मासेषु ईदृशं गर्भलक्षणम् ॥१९॥

कार्त्तिकादिषु मासेषु ग्रहणं[6] सूर्यचन्द्रयोः ।
तारकापत्तनं चैव उल्कापातो यदा भवेत् ॥२०॥

---

१. 'अथाश्विनी' *अ*, अन्यत्र 'अथवाश्विनी' ।

२. 'वर्षते' *ध*, 'अवर्षते' *अ*, अन्यत्र वर्तते ।

३. [संक्रान्तौ अर्धवृष्टिः स्यात्] ।

४. [गर्भिते] ।

५. ''वर्षते' *ध*, *व*, अन्यत्र वर्तते ।

६. 'यदीन्दुग्रहणं भवेत्' *ध*, 'यदीन्दुसूर्यग्रहणं भवेत्' *व*, *स*, अन्यत्र 'ग्रहणं सूर्यचन्द्रयोः' ।

संग्रहेत्सर्वधान्यानि प्रयत्नेन तु मानवः ।
मासेषु पञ्चमे देवि लाभस्तु द्विगुणो भवेत् ॥२१॥

इति कार्तिकमासफलम्

## [ मार्गशीर्षफलम् ]

मार्गादिपञ्चमासेषु आदिपक्षतिथिक्षयः ।
क्षत्रभङ्गश्च दुर्भिक्षं जायते राजविग्रहः ॥२२॥

मार्गशीर्षे महेशानि सप्तमी नवमी दिने ।
ईशानदिशमाश्रित्य दृश्यते मेघमण्डलम् ॥२३॥

स्तोकं वर्षति पर्जन्यो ह्यथवा वातमादिशेत् ।
दशम्यामुत्तरे वातः सितायां यदि जायते ॥२४॥

मार्गशीर्षे त्वहोरात्रं तदा स्नानमुदीरितम् ।
मार्गशीर्षस्य मासे तु नक्षत्रं पितृदैवतम् ॥२५॥

कृष्णपक्षे[1] चतुर्थ्यां तु सविद्युन्मेघदर्शनम् ।
तदैव[2]मृक्षमाषाढ़े जलपूर्णा[3] मही भवेत् ॥२६॥

चतुर्थ्यां जलयोगं च सुभिक्षं च समादिशेत् ।
रात्रौ दृष्ट्वा[4] दिने वृष्टिः दिने दृष्ट्वा[5] भवेन्निशि ॥२७॥

---

१. 'पाठाभावः श्लो० सं० २६ उत्तरार्धः' *ध* ।

२. 'नधैव' *अ*, नदैव' *व*, अन्यत्र 'तदैव' ।

३. 'जलं च पूर्णिमा भवेत्' *अ*, अन्यत्र जलपूर्णा मही भवेत् ।

४. दृष्ट्या *अ*, अन्यत्र 'दृष्ट्वा' ।

५. 'दृष्टो' *अ* अन्यत्र दृष्ट्वा ।

पुमांस्त्रीगर्भसंयोगं विद्युन्मेघस्तथैव च ।
ऋक्षे त्वाष्ट्रे तथाऽष्टम्यां नवम्यां वायुदैवतम्[1] ॥२८॥

सर्वतो दिशि दृश्यन्ते विद्युदभ्रेण संयुतम् ।
तदृक्षं चैवमाषाढ़े जलपूर्णं महीतलम् ॥२९॥

सुभिक्षं शस्यनिष्पत्तिर्वसुधा नन्दते प्रिये ।
चतुर्थी पञ्चमी षष्ठी अश्लेषा च मघा तथा ॥३०॥

यदा तु पूर्वफल्गुन्यां त्रिरात्रं वर्षते ध्रुवम् ।
अष्टमी नवमी चैव चित्रानक्षत्रसंयुता ॥३१॥

आषाढ़े शुक्लपक्षे तु अष्टम्यां चैव सुन्दरि ।
स्वातीनक्षत्रसंयुक्तं त्रिरात्रं वर्षते ध्रुवम् ॥३२॥

नवमी दशमी चैव एकादश्यां यदा भवेत् ।
चित्रा स्वाती विशाखासु अमावास्या प्रवर्षति ॥३३॥

सर्वऋक्षैस्तु संयुक्ता सर्वमारुतसंयुता ।
वर्षते तद्दिने देवि नाऽत्र कार्या विचारणा ॥३४॥

आषाढ़े कृष्णपक्षे तु वरुणमृक्षसंयुतम् ।
नवमी दशमी चैव वर्षते नात्र संशयः ॥३५॥

द्वादश्यां च त्रयोदश्यां चतुर्दश्यां तथैव च ।
आमावस्या च विज्ञेया सर्वनक्षत्रसंयुता ॥३६॥

अष्टमारुतसंयुक्तं मेघविद्युत्समन्वितम् ।
आषाढ़े शुक्लपक्षे तु वर्षते नात्र संशयः ॥३७॥

---

१. श्लोकोऽयं ध, स, मातृकायामेवास्ति ।
२. श्लो० सं० २८ ध, व, स, मातृकायामेवास्ति ।

एवं[1] देवि समायोगे मेघानां गर्भलक्षणम् ।
कार्त्तिक्यां मार्गशीर्षस्यां मयाऽख्यातं वरानने ॥३८॥

## इतिमार्गशीर्षफलम्

### [ पौषफलम् ]

पौषे भाद्रपदे माघे शुक्लपक्षे तिथिक्षयः ।
यत्संख्या जायते चाह्नि तत्संख्या देशविग्रहः ॥३९॥

पौषे शुक्लचतुर्थ्यान्तु सविद्युद्दर्शमुत्तमम् ।
अभ्रच्छन्नं नभश्श्रेष्ठं मत्स्यमैन्द्रधनुस्तथा[1] ॥४०॥

अजपादं प्रयत्नेन अहोरात्रं निरीक्षयेत् ।
परिवेशं गर्जितं वा पतन्ति जलविन्दवः ॥४१॥

सर्वेषामेव चिन्हानां विद्युद्दर्शनमुत्तमम् ।
कृष्णे पक्षे तथाषाढ़े अमोघं वर्षति प्रिये ॥४२॥

विद्युन्मेघो धनुर्मत्स्यं यद्येकमपि नो भवेत् ।
न ऋक्षं वर्षते तत्र न कालं वर्षते तदा ॥४३॥

अन्येन[2] ज्ञायते सर्वं वर्षणं चाप्यवर्षणम् ।
एतद्वै परमं गुह्यं गर्भाधानस्य लक्षणम् ॥४४॥

विद्युत्संयोगजं चिन्हं न देयं यस्य कस्यचित् ।
पौषे मासे शुक्लपक्षे शततारर्क्षगे पुनः ॥४५॥

---

१. 'मीदृग' अ, अन्यत्र 'ऐन्द्र' ।
२. [अनेन] ।

पञ्चमी अजपादेन अभ्रमारुतसंयुतम् ।
विद्युन्मेघसमायुक्तं गर्भश्चैव प्रजायते ॥४६॥

आषाढ़े कृष्णपक्षे तु चतुर्थ्यां वर्षते ध्रुवम् ।
द्रोणसंख्या च विज्ञेया सप्तरात्रं प्रवर्षणम् ॥४७॥

धनूराशिस्थिते सूर्ये गर्भ[1]श्रावयते ध्रुवम् ।
वृष्टि[2]रेकोनविंशतिदिने वै जायते ध्रुवम् ॥४८॥

दिनसंख्या बरारोहे वर्षते नात्र संशयः ।
गोपितं सर्वशास्त्रेषु मया चात्र प्रकाशितम् ॥४९॥

मूले च वर्षते आर्द्रा पूर्वाषाढ़े पुनर्वसु ।
उत्तरायां तथा पुष्यं श्रवणं सर्प[3]दैवतम् ॥५०॥

धनिष्ठा च मघा ज्ञेया शतभं पूर्वफल्गुनी ।
भाद्रपदोत्तराहस्तं पूर्वार्यमणदैवतम् ॥५१॥

रेवती त्वाष्ट्रभे देवि त्विदं पुंसां वरानने ।
वर्षते च चतुर्मासि सुभिक्षं सर्वदा भवेत् ॥५२॥

पौषमासेषु देवेशि कृष्णपक्षस्य सप्तमी ।
सर्वलक्षणसंयुक्ता अष्टमारुतसंभवा[4] ॥५३॥

आषाढ़े शुक्लपक्षे तु वर्षते नात्र संशयः ।
अभ्रर्वा वेष्टिताकाशे भुवि वातैश्चपुरिता ॥५४॥

---

१. 'मूलाद्यागर्भधारणं' ध, व, स, अन्यत्र 'गर्भश्रावयते ध्रुवम्' ।
२. 'गर्भघाश्च ध्रुवं वृष्टिः पञ्चोनेविंशतिर्दिने' ध, व, स, अन्यत्र 'वृष्टि-रेकोनविंशतिदिने' ।
३. 'पितृ' ध, अन्यत्र 'सर्प' ।
४. 'संयुता' ध ।

अहोरात्रं प्रयुक्तेन पञ्चवर्णास्तु जायते ।
दिव्यगर्भे तु विज्ञेयो श्रावणी शुक्लसप्तमी ॥५५॥

चित्रा स्वाती विशाखा च परान्हे जलसंयुतः ।
ऐरावतो नाम मेघो ह्यष्टमी ;नवमीयुतः ॥५६॥

वर्षते नात्र सन्देहो सप्तरात्रं वरानने ।
त्रयोदश्यां चतुर्दश्यां अमावास्यां च सुन्दरि ॥५७॥

वर्षते च त्रिरात्रेण विद्युन्मेघसमन्वितम् ।
श्रावणे पूर्णिमास्यां तु श्रवणा चैव वर्षति ॥५८॥

द्रोणसंख्या विजानीयात् प्राहुस्तद्भैरवः स्वयम् ।
पौषे पुष्ये पूर्णिमायां श्रावणे श्रवणस्तथा ॥५९॥

पौर्णमास्यां प्रवर्षन्ति सिते पक्षे न संशयः ।
पौषस्य शुक्लपक्षे तु शतभिषर्क्षमेव च ॥६०॥

अभ्रच्छन्नं तथाकाशमष्टमारुतसंभवम् ।
श्रावणे कृष्णपक्षे तु पूर्वभाद्रपदस्तथा ॥६१॥

मध्याह्ने जलसंभूतं वर्षते च दिनद्वयम् ।
पौषेषु[1] पुष्यसंयुक्ता श्रावणे श्रवणा तथा ॥६२॥

श्रावणे पुष्यामावास्यां पूर्वाह्ने जलमादिशेत् ।
निष्पत्तिः सर्वधान्यानां प्रजा च निरुपद्रवः ॥६३॥

पौषस्य शुक्लपक्षे तु सावधानेन चिन्तयेत् ।
सप्तमी[2] रेवतीयुक्ता अष्टम्यां चाश्विभामिनी ॥६४॥

---

१. [पौषे तु] ।
२. 'सप्तमी नवमी युक्ता' ख, अन्यत्र सप्तमी रेवतीयुक्ता ।
३. 'अश्विनी भवेत्' व ।

नवमी भरणी चैव वात विद्युद्विनिर्दिशेत् ।
हिमं तु जायते तत्र एवं गर्भसमुद्भवम् ॥६५॥

एकादश्यां तथा देवि पूर्णिमायां तथैव च ।
आषाढ़स्य त्वमावाश्यां प्रभूतजलमादिशेत् ॥६६॥

विद्युत्स्फुरति वेगेन[1] गर्जिता[2] प्राणनाशिनी ।
एवं विज्ञायते देवि मेघानां वृष्टिलक्षणम् ॥६७॥

एकादश्यां तथा ज्ञेया महिमा विद्युता युता ।
सजला रोहिणीयोगं सदा दृश्यं विचक्षणैः ॥६८॥

द्वितीया पूर्णिमा चैव सहिता विद्युतायुता ।
कालनिष्पत्तिरादेश्यं मेघाच्छन्नं वरानने[3] ॥६९॥

प्रथमे श्रावणे मासे पक्षे द्रोणं[4] समादिशेत्[5] ।
गावः पयोश्च (?) बाहुल्यं सवत्सानां जायते प्रिये ॥७०॥

पौषे[6] मूलभरण्यन्तं चन्द्रवारेण[7] साभ्रका ।
आर्द्रादौ च विशाखान्तं रविमानेन वर्षते ॥७१॥

---

१. 'तत्त्वेन' *ध*, अन्यत्र वेगेन ।

२. 'गर्जन्ति' *ध*, अन्यत्र गर्जिता ।

३. 'तथाम्वरे' *ध*, अन्यत्र वरानने ।

४. 'अर्कं' *अ* अन्यत्र द्रोणं ।

५. 'दिनमादिशेत्' *अ*, अन्यत्र समादिशेत् ।

६. 'पौषे हिरण्यन्ते चन्द्रचारिणे साधकाः' *स* ।

७. [चान्द्रचारेण] ।

पौषस्य पौर्णमास्यां तु चन्द्रमा विचरिष्यति ।
उत्तरे दक्षिणे चैव यदा विद्युत्प्रजायते[1] ।।७२।।

अभ्रच्छन्नं यदाकाशं महावृष्टिस्तदा भवेत् ।।७३।।

आषाढस्य त्वमावास्यां[2] जलयोगो भविष्यति ।
पौषे कृष्णनवम्यां तु स्वातीयोगे जलं भवेत् ।।७४।।

सुभिक्षं क्षेममारोग्यं जायते नात्र संशयः ।
अभ्राणि यदि पूर्वं वा जलं वा पतितो भुवि ।।७५।।

अभ्रच्छन्नं जलं स्वल्पं जलं पतति वर्षति ।
पौषस्य कृष्णसप्तम्यां अभ्रैर्वा वेष्टितं नभम् ।।७६।।

अष्टमारुतसंयुक्तं दिव्यगर्भं[3] प्रजायते ।
श्रावणे शुक्लपक्षे तु स्वाती ऋक्षेन सप्तमी ।।७७।।

ध्रुवं वर्षति पर्जन्यमेतत्सर्वं वरानने ।
अष्टमी नवमी चैव दशमी च प्रवर्षति ।।७८।।

एवं नक्षत्रसंयोगे श्रावणे वृष्टि जायते ।
त्रयोदश्यां चतुर्दश्यां अमावास्यां च सुन्दरि ।।७९।।

गर्भिते[4] च त्रिरात्रेण विद्युन्मेघसमन्वितम् ।
श्रावणे पूर्णमास्यां तु श्रवणेषु प्रवर्षति ।।८०।।

---

१. प्रदृश्यते 'ध' 'व', अन्यत्र प्रजायते ।
२. त्वमाघस्य 'व' ।
३. वर्षं 'ध' ।
४. गर्भितेन 'अ' [गर्भंते च] ।

द्रोणसंख्या भवेन्मेघ सुभिक्षं जायते तदा[१] ।
ऐन्द्री विद्युदमावास्यां दर्शनं वा हिमस्य च ॥८१॥

अभ्रच्छन्नं नभो वापि जलं वा यदि जायते ।
श्रावणे शुक्लसप्तम्यां स्वातीयोगो जलं भवेत् ॥८२॥

निष्पत्तिः सर्वसस्यानां प्रजा च निरुपद्रवः[२] ।
पौषस्य कृष्णसप्तम्यां निरभ्रं चेन्नभस्थलम् ॥८३॥

सहिमं स्वातियोगं च ईशाने विद्युतस्य च ।
श्रावणे पूर्णमास्यां तु श्रावणे जलसंभवः ॥८४॥

सुभिक्षं च समादिश्यं तस्मिन् वर्षे न संशयः ।
अमावास्यां तु पौषस्य शनिसूर्यमहीसुतः ॥८५॥

संग्रहेत् सर्वधान्यानि लाभस्तु द्विगुणं भवेत् ।
सुष्यते सागरजलं[३] नदी सत्सरोवरम्[४] ॥८६॥

क्षत्रभङ्गं भविष्यन्ति जनानां मरणं भवेत् ।
पौषस्य पूर्णमास्यां तु यदिन्दुग्रहणं भवेत् ॥८७॥

मौक्तिकं विद्रुमं शंखं कुसुमं कुङ्कुमं तथा ।
संग्रहेत् त्रीणि मासानि द्विगुणं लाभ जायते ॥८८॥

पौषस्य लक्षणं देवि सर्वं ते कथितं मया ।

इति पौषस्य फलम्

---

१. तथा '*ध*' ।
२. विरुपद्रवः '*अ*' ।
३. सागरास्सर्वे '*ध*' ।
४. सह सरोवरं '*अ*' ।

## अथ माघफलम्

वर्षंते माघमासस्य संक्रान्तिर्जायते यदा[1] ।।८९।।

बहुक्षीरघृता गावो बहुशस्या वसुन्धरा ।
माघादि दिवसे वारो बुधो भवति चेत्तदा ।।९०।।

मासत्रयं समर्घं वाथवा वर्षा विनश्यति ।
बुधश्च[2] प्रथमो वारः यदि माघस्य जायते ।।९१।।

ततः प्रभृतिभिर्मासैः महर्घं राजविग्रहम् ।
प्रतिपत्सर्वमासेषु बुधो दुर्भिक्षकारकः ।।९२।।

ज्येष्ठे मासि तथा नूनं परवर्षा[3] विनाशकृत् ।
न माघे पतितं शीतं ज्येष्ठे नैर्ऋतिवृष्टिकृत् ।।९३।।

तन्द्रायां[4] पतितं तोयं दुष्टकालस्तदा भवेत् ।
माघे शुक्लयमाश्विन्यां मेघयुक् शस्य जायते ।।९४।।

अथवा मेघहीनस्य शस्यानां धारयेत्सुधी ।
पौष भाद्रपदे माघे शुक्लपक्षे तिथिक्षयम् ।।९५।।

यत्संख्या जायते चाह्नि तत्संख्यादेश विग्रहम् ।
पञ्चार्कः पञ्चभौमश्च पञ्चसूर्यसुतस्तथा ।।९६।।

एकस्मिन्नपि मासेषु[5] तदा रौरवमादिशेत् ।
गुरुचन्द्रविहायान्ये वाराः पञ्च भवन्ति चेत् ।।९७।।

---

१. तदा *ध* ।
२. बुधस्य *'ध'* ।
३. वर *'अ'* ।
४. तदायां *'अ'* अन्यत्र तन्द्रायां [नार्द्रायां] ।
५. 'मासेन' *ध*, अन्यत्र मासेषु [मासे तु] ।

एकस्मिन्नपि मासे न दुर्भिक्षं राजविग्रहम् ।
पूर्वैशान्यादिभिर्ये च उक्तं शस्य[1] फलं शृणु ।।९८।।

भ्रामयन्ति कुलालेव चक्रे कृत्वा तु मेदिनीम् ।
माघफाल्गुन चैत्रेषु वैशाख-ज्येष्ठमासयाः ।।९९।।

स्वातीयोगं तथा विशद्दिनानि जलम् । (?)
पराह्णे जलसम्पूर्णा वर्षते[2] घटिकाद्वयम् ।।१००।।

दशम्यां चासिता[3] योगे स्वाती योगेन संयुतम् ।
अष्टमी नवमी देवि ! वर्षते च समुच्चयम् ।।१०१।।

अमावस्यां महेशानि वारिदो यदि दृश्यते ।
पौर्णमास्यां भाद्रपदे पूर्णमेघं प्रवर्षते ।।१०२।।

माघस्य प्रतिपद्देवि सवाता मेघगर्जिता ।
यदा भवेत्तदा ग्राह्यं तैलं सुगन्धिभिर्युतम् ।।१०३।।

मासे तृतीयगे देवि पुस्कलं लाभकांक्षिभिः ।
द्वितीयायां[4] धनैर्युक्तं मेघच्छन्नं नभस्थलम् ।।१०४।।

सविद्युज्जायते यत्र तत्र धान्यं महर्घता ।
तृतीया मेघ संयुक्ता निर्जला यदि गर्जिता ।।१०५।।

---

१. [तस्य] ।

२. वर्षते **स**, अन्यत्र जायते ।

३. च शिता '**ध**' अन्यत्र चासिता ।

४. द्वितीयायां धनै.........., धान्यं महर्घता श्लोकं ३½ तः ४½ या. **स** मातृकायामभावः ।

गोधूमांस्तत्र गृह्णीयात् यवाश्चैव विशेषतः ।
मासानां त्रितयस्यां त्रिगुणो लाभ जायते ॥१०६॥

सर्वेषु चैव मासेषु ऋक्षवृद्धिः[1] सुभिक्षकृत् ।
चतुर्थी मेघसंयुक्ता विन्दुभि[2]र्जलसंभवा ॥१०७॥

नारिकेलानि पत्राणि महर्घानि भवन्ति हि ।
पञ्चमी मेघसंयुक्ता यदा विद्युद्विवर्जिता ॥१०८॥

उदक्पवनसंयुक्तं भाद्रपदं न वर्षति ।
षष्ठी[3] सविद्युदाकाशं निरभ्रा निर्जलादृशा ॥१०९॥

कर्पासं संग्रहेत्तत्र लाभो भवति पुष्कलः ।
सप्तमी सोमवारेण यदि गच्छेद् घनस्य च ॥११०॥

घोरधारास्तथा मेघा राजविद्रवमेव च ।
सप्तम्यां सोमवारे स्यान्माघे पक्षे सिते यदा । १११॥

दुर्भिक्षं जायते रौद्रं विग्रहं सर्वभूभुजाम् ।
अष्टम्यां यदि पश्यन्ति आदित्यमुदयं गतम् ॥११२॥

न वर्षते तदार्द्रायां श्रावणाख्ये तदा प्रिये ।
यदा च कुरुते देवि नवम्यां चन्द्रमण्डलम् ॥११३॥

---

१. ऋक्षवृद्धिः "व" अन्यत्र ऋक्षवृष्टिः ।

२. विन्दुभिः "ध" अन्यत्र दुर्भिक्षं ।

३. षष्ठी सबिन्दुकाशेषा 'ध', अन्यत्र षष्ठी सविद्युदाकाशं ।

आषाढ़े पूर्णवृष्टिः स्याद्धान्यं लोके समर्घता[1] ।
माघस्य शुक्लपक्षे तु सप्तम्यादि दिनत्रयम् ।।११४।।

गर्जते वर्षते देवि तदाषाढ़े सुवृष्टिषु ।
माघस्य शुक्लसप्तम्यां सावधानैरहर्निशम् ।।११५।।

वीक्षणीयं प्रयत्नेन कालनिश्चयकारणम् ।
अहोरात्रं भवेत्साभ्रं वारुनं वायुना[2] सह ।।११६।।

ऐन्द्रो वाप्यथ कौबेरः सर्वरीषु दिवापि वा ।
महासुभिक्षकं देवि तद्वर्षे निरुपद्रवम् ।।११७।।

भवन्ति चेति चिह्नानि मयाख्यातं शृणु प्रिये ।
माघस्य[3] शुक्लसप्तम्यां [4]मेघैर्वर्षति वै घना ।।११८।।

दुर्दिनं च यदा पश्येद्वर्षाकालं तदा शुभम् ।
माघस्य शुक्लसप्तम्यां मेघैश्छन्नं यदाम्बरम् ।।११९।।

तत्प्रदेशे सुवृष्टिः स्यात सुभिक्षं तत्र निर्दिशेत् ।
पूर्णिमायां वा अमावास्यां सलग्नस्तारकक्षयः ।।१२०।।

महर्घन्तत्र पूर्वार्द्धान्मासमध्येऽपि जायते ।
सप्तम्यां स्वातियोगेषु हिमं पतति चेद्यदि ।।१२१।।

अन्धकारे माघमासे वायुर्वा[5] चण्डवेगतः ।
सप्तम्यां स्वातियोगे यदि पतति हिमं माघमासेऽन्धकारे ।।१२२।।

---

१. महर्घता '*ध*', अन्यत्र समर्घता ।
२. विद्युता '*ध*' ।
३. शुक्लपक्षस्य सप्तम्यां '*ध, व, स*' ।
४. यन्मेघे वर्षते घनाः '*ध, व, स*' ।
५. वायुर्वीचण्डरेगतः '*ध*' [वायुर्वाति च वेगतः] ।

वायुर्वा चण्डवेगो सजलजलधरो वर्षते वापि नूनम् ।
विद्युन्मालाकुलं वा तदपि च भवते नष्टचन्द्रार्कतारा ॥१२३॥

विज्ञेया विडेषु मुदितजनपदैः सर्वशस्यैरुपेतम् ॥१२४॥

विज्ञेया वै विशेषान्मुदित जनपदैः सर्वशस्यैरुपेतम् ।
माघफाल्गुनमासेषु चैत्रवैशाखयोस्तथा ॥१२५॥

स्वातीयोगं विजानीयात् आषाढेषु विशेषतः ।
आषाढस्य सिता[1]ष्टम्यां घनछन्नोदये शशी ॥१२६॥

तदा तु वर्षते मेघा सर्वशस्यं भवन्ति हि ।
माघस्य नवमी कृष्णा मूलर्क्षेण[2] च संयुता ॥१२७॥

विद्युन्मेघधनुर्मत्स्यमभ्रैर्वा वेष्टितो नभः ।
मासि भाद्रपदे देवि वर्षते नवमी दिने ॥१२८॥

द्रोणसंख्या भवेन्मेघा मयाख्यातं शृणु प्रिये ।
माघस्य नवमी कृष्णा दशम्येकादशी तथा ॥१२९॥

सवाता विद्युता युक्ता कथयन्ति जलं बहु ।
सप्तमीमाघमासस्याथवा कृष्णा त्रयोदशी ॥१३०॥

चतुर्दश्यां तथा देवि पूर्वस्यां दिशि संस्थितम् ।
बहूदककरा मेघा त्वाषाढे सप्तरात्रकम् ॥१३१॥

अमावास्यां तिथौ धिष्ण्यं यदि चेत् स्वातिकृत्तिके ॥१३२॥

---

१. असित 'ब' ।

२. मूशलर्क्षे न च संयुता 'अ' ।

नूनं घनान्वितं देवि वर्षा तत्र भविष्यति ।
माघमासे त्वमावास्यामभ्रच्छन्नं यदा भवेत् ।।१३३।।

हिमं सवातसंयुक्तमहोरात्रेषु वर्षति ।
भाद्रपन्मासिके देवि तदा वृष्टिर्भविष्यति ।।१३४।।

अथवा पञ्चवर्णानां दिव्यगर्भसमुद्भवम् ।
तदा भाद्रपदे मासि पूर्णिमायां प्रवर्षति ।।१३५।।

माघस्य कथितं देवि यादृशं गर्भलक्षणम् ।
अथान्यत्सम्प्रवक्ष्यामि शृणु भामिनि यत्नतः ।।१३६।।

इति माघफलम्

[ फाल्गुनमासफलम् ]

ईश्वर उवाच

सितास्तं फाल्गुने मासि यदि चेच्छृणु भामिनि ।
तदा दुर्भिक्षमादेश्यं षण्मासावधि धीमता ।।१३७।।

फाल्गुने सौरसंक्रान्तौ यदा वर्षति माधवः ।
विचित्रं जायते शस्यं वैशाखज्येष्ठयोस्तथा ।।१३८।।

फाल्गुने शृणु देवेशि यथा जानन्ति साधकाः ।
सप्तमीशुक्लपक्षस्य कृत्तिकाऋक्षसंयुता ।।१३९।।

अष्टमी नवमी चैव दशम्येकादशी तथा ।
नभस्येदममावास्यां (?) द्रोणमेघः प्रवर्षति ।।१४०।।

अथवाश्विवयुजे मासि चतुर्थी पञ्चमी तथा ।
एवं योगेऽपि देवेशि वर्षते नात्र संशयः ।।१४१।।

फाल्गुने शुक्लसप्तम्यां पौर्णमास्यां तथैव च ।
निर्वातो गगने मेघो यदि स्याद्विद्युता युता ।।१४२।।

तदा देवि भविष्यन्ति सुभिक्षं क्षेममेव च ।
पूर्वोत्तरजवातेन क्रियते जलमुत्तमम् ।।१४३।।

नभस्ये कृष्णसप्तम्यां अमावास्यां तथैव च ।
वर्षते नात्र सन्देहः मयाख्यातं वरानने ।।१४४।।

फाल्गुने कृष्णसप्तम्यामष्टम्यादि दिनत्रयम् ।
एभिर्दिनैः समादृश्यं जलयोगसमुद्भवम् ।।१४५।।

विज्वला मारुतं याति समेघा च जलान्विता ।
योगं समुद्भवं देवि चाश्वियुक्मासि वर्षणम् ।।१४६।।

फाल्गुनस्य च मासस्य वर्षते चाष्टमीदिने ।
सुभिक्षं च समादिश्यं सस्यसम्पत्तिमुत्तमाम् ।।१४७।।

कृष्णफाल्गुनतृतीयायां सवातं मेघ दृश्यते ।
आश्विनशुक्लतृतीयायां द्वितीयासु[1] च वर्षति ।।१४८।।

फाल्गुनकृष्णनवम्यां च मूलर्क्षेण संयुता ।
अभ्रच्छन्नं तथाकाशमष्टमारुतसंभवा ।।१४९।।

आश्विने कृष्णसप्तम्यां वर्षते नात्र संशयः ।
रात्रौ वृष्टिर्दिवा[2]वर्षेद्दिनेवृष्टिर्भवेन्निशि ।।१५०।।

इति फाल्गुनमासफलम्

---

१. [द्वितीयायां च वर्षति] वा [दिवारात्री च वर्षति] ।
२. वर्षं "द्य" अन्यत्र वर्षेत् ।

[ अथ चैत्रमासफलम् ]

ईश्वर उवाच

चैत्रे च सौरिसंक्रान्तौ यदि वर्षति माधवः ।
विचित्रं जायते शस्यं वैशाखज्येष्ठमन्तरे ।।१५१।।

वैशाखे श्रावणे चैत्रे पञ्चाङ्के[1] चिह्नवन्ति हि ।
दुर्भिक्षं तत्र जानीयात् राज्ञो विघ्नं समादिशेत् ।।१५२।।

शुक्लपक्षस्य चैत्रेण चतुर्थी पञ्चमीषु च ।
वर्षणं प्राक् शुभो किञ्चित् क्रमादुत्तरतोऽधमः ।।१५३।।

चैत्रस्य शुक्लपञ्चम्यां रोहिणी दृश्यते यदि ।
साभ्रं नभस्तदा देवि गर्भस्य परिपूर्णता ।।१५४।।

चैत्रस्य शुक्लपञ्चम्यां अभ्रच्छन्नं यदा नभम् ।
गोधूमैः[2] श्रावणे मासि द्विगुणं लाभमादिशेत् ।।१५५।।

निर्मलं वा दिशः सर्वा दृश्यते वायुना सह[3] ।
गोधूमास्तत्र विज्ञेया महर्घानि भवन्ति हि ।।१५६।।

द्वितीये[4] दिवसे प्राप्ते चैत्रे वातैश्च पूरिताः ।
नवमेघाः प्रदृश्यन्ते वृष्टिर्भाद्रपदे भवेत् ।।१५७।।

तृतीये दिवसे प्राप्ते उत्तरे यदि मारुतः ।
नूनं मेघाः प्रदृश्यन्ते कार्त्तिके वृष्टिमादिशेत् ।।१५८।।

---

१. पञ्चार्कं *ध*, *स*, अन्यत्र पञ्चाङ्के [?] ।
२. "श्रावणे मासि गोधूम" "*अ*" ।
३. युता '*ध*' अन्यत्र सह ।
४. द्वितीयं दिवसं प्राप्तम् "*स*" ।

चतुर्थे दिवसे प्राप्ते यदि वर्षति वारिदः ।
दुर्भिक्षं जायते घोरमनावृष्टिर्न संशयः ॥१५९॥

दिनद्वयं यदा याति वायुर्दक्षिणपश्चिमे ।
तदा न पच्यते धान्यं दुर्भिक्षं चात्र जायते ॥१६०॥

तृतीया पञ्चमी देवि ! वायुः प्रागुत्तरे यदि ।
सर्वसस्यानि जायन्ते प्रजा[1] कृतयुगोपमाः ॥१६१॥

चैत्रमासस्य देवेशि शुक्लपक्षस्य पञ्चमी ।
सप्तम्यां च त्रयोदश्यां यदा मेघं प्रवर्षति ॥१६२॥

तारकापत्तनं देवि गर्जितं विद्युतैः सह ।
वर्षाकालं सदा[2] छिद्रं नात्र कार्या विचारणा ॥१६३॥

चैत्राश्दिदिग्दिनं यावत् कल्पयित्वा क्रमेण च ।
आर्द्रादिस्वातिपर्यन्तं वृष्टिहेतुर्विलोकयेत् ॥१६४॥

दुर्दिनं वा जलं वातं तत्संख्या भवति ध्रुवम् ।
तत्संख्या जायते वृष्टिः दग्धमृक्षं वरानने ॥१६५॥

मूलमादौ यमस्यन्ति चैत्रे कृष्णे निरीक्षयेत् ।
एभिश्च गलिते ऋक्षे गर्भश्रावो विधीयते ॥१६६॥

साभ्रैर्निहन्यते वृष्टिः निरभ्रैर्वृष्टिरुत्तमा[4] ।
एतच्छृणुष्व योगादीन् सावधानतया[5] प्रिये ॥१६७॥

---

१. प्रजनां 'ध, व' अन्यत्र प्रजा ।
२. तदा 'अ' अन्यत्र सदा ।
३. चैत्रादि द्विग्नं 'स' अन्यत्र चैत्रादिदिग्दिनं ।
४. चोत्तमाम् 'अ' ।
५. समा 'अ' ।

चैत्रस्य शुक्लपञ्चम्यां सप्तमी नवमीषु च ।
पूर्णिमायां तथा देवि जलयोगस्य निश्चयः ।।१६८।।

पञ्चमी सह रोहिण्यां सप्तमी शिवभानि च ।
नवमी सह पुष्येन ज्ञातव्यं कालचिन्तकैः ।।१६९।।

पूर्णिमा स्वाती योगे तु विद्युन्मेघ समन्वितम् ।
एभिश्चगलितैर्ऋक्षैर्गर्भश्रावो विधीयते ।।१७०।।

पुष्ट[1]पुष्टैः समादेश्यं नान्यऋक्षैः कदाचन ।
भवन्ति गलिता गर्भा एभिर्जातैर्विचक्षणैः ।।१७१।।

चैत्रस्य शुक्लपक्षे तु त्रयोदश्यां विशेषतः ।
धूमिका जायते यत्र मेघस्तत्र न वर्षति ।।१७२।।

इति चैत्रफलम्

## [ अथ वैशाखफलम् ]

ईश्वर उवाच

वैशाखे पञ्चरुपी स्यात् ज्येष्ठे धर्मान्वितं शुभम् ।
मासाष्टकनिमित्तेन चतुष्टयफलप्रदम् ।।१७३।।

वैशाखे गर्जिता भूरि सलिलः पवनो घनः ।
उष्णो ज्येष्ठे सिताष्टम्यां कृशानैर्गर्भवेष्टितैः ।।१७४।।

वैशाखे शुक्लपञ्चम्यां अभ्रच्छन्नं यदा नभम् ।
गर्जितं वर्षते वापि पूर्ववातो यदा भवेत् ।।१७५।।

---

१. [पुष्ये वृद्धिः] ।

उदयास्तमनं यावत् ज्ञातव्यं च विचक्षणैः ।
संग्रहेत्सर्वधान्यानि प्रचुरानि सुरेश्वरि ॥१७६॥

मासि भाद्रपदे शस्यं महर्घानि भवन्ति हि ।
वैशाखे प्रतिपच्चैव सप्तमी नवमीषु च ॥१७७॥

अष्टमी च तथा देवि मेघो गच्छति चाम्बरे[1] ।
माधवं वर्षते नैव वृष्टिर्मध्यम[2] जायते[3] ॥१७८॥

मेषसंक्रान्तिकालाच्च नवष्वपि दिनेष्वथ ।
यत्राभ्रं वातविद्युद्वाप्यार्द्रादौ तत्र वर्षति ॥१७९॥

अथवा नवमासेषु वाताभ्रादि शुभं भवेत् ।
यस्यां[4] दिशि च सम्पूर्णं तद्विशोध्यखिलं जगत[5] ॥१८०॥

मेषराशिस्थते सूर्ये अश्विनीऋक्षसंयुते ।
यदा तु वर्षते देवि मूलगर्भो विनश्यति ॥१८१॥

| मू | पू | उ | श्र | घ | श | पूभा | उभा | रे | मूलादी पुरुषा सदा |
|---|---|---|---|---|---|---|---|---|---|
| अ | भ | कृ | रो | मृ | आ | पुन | पु | श्ले | गर्भधारणान्वने रवौ |
| आ | पु | पु | अश्ले | म | पूफा | उफा | ह | चि | गर्भपतिमेषे रवौ |

१. चाम्वरे *ध, व*, अन्यत्र चाम्बरै ।

२. मध्ये '*ध*' अन्यत्र मध्यम ।

३. प्रजायते *ध* अन्यत्र जायते ।

४. यस्यां दिशि घनं याति दिग्विष्वनेत्र वर्षति । यदा नवसु मासेषु वाताभ्रादि शुभं भवेत् ॥ इति पाठः *ध* मातृकायामधिकः ।

५. जलं *ध* अन्यत्र जगत् ।

फा० १३

यमादिसर्पदैवत्यं क्रमेण यदि वर्षति ।
पूर्वाषाढादि पौष्णान्तं गर्भो चैव विनश्यति ॥१८२॥

पञ्चमे पञ्चमस्थाने गर्भः पतति नान्यथा ।
एवमृक्षे प्रवर्षन्ति गर्भंश्रावं शृणु प्रिये ॥१८३॥

## आर्द्रादिनक्षत्रफलम्

आर्द्रा-पुनर्वसु-पुष्ये अश्लेषा च मघा तथा ।
पञ्चभिर्गलिते ऋक्षे छिद्रं वर्षति माधवः ॥१८४॥

आर्द्रा प्रवर्षते देवि गर्जितं वा कथञ्चन ।
सर्वे गर्भाश्च तत्रैव प्रदुष्टा वर्षते प्रिये[1] ॥१८५॥

वैशाखे शुक्लपञ्चम्यां पूर्ववातो यदा भवेत् ।
अभ्रच्छन्नं यदाकाशं पतन्ति जलबिन्दवः ॥१८६॥

तदा व्रीहिस्तु संग्राह्यं लाभो भवति पुष्कलः ।
तत्सर्वं विक्रयेच्छीघ्रं मासि भाद्रपदे तथा ॥१८७॥

## इति वैशाखफलम्

## [ अथ ज्येष्ठफलम् ]

### ईश्वर उवाच

ज्येष्ठस्य प्रथमे पक्षे या तिथिर्प्रथमा भवेत् ।
तद्दिने याति यो वारस्तन्निरीक्षेत् प्रयत्नतः ॥१८८॥

---

१. वर्षति ध्रुवम् "अ" अन्यत्र वर्षते प्रिये ।

भानुभिः पावको याति कुजे व्याधिजलक्षयम् ।
सोमपुत्रेण च दुर्भिक्षं भवन्ति नात्र संशयः ॥१८९॥

गुरूभार्गवसोमेषु यद्येकोऽपि प्रजायते ।
जलेन पूरिता पृथ्वी धनधान्यसमाकुला ॥१९०॥

कदाचिद्दैवयोगेन शनिवारः प्रजायते ।
जल[1]शोषं प्रजानाशं छत्रभङ्गं भवेत्तदा ॥१९१॥

आर्द्रादौ नवनक्षत्रं ज्येष्ठशुक्लं निरीक्षयेत् ।
साभ्रेण हन्यते वृष्टिर्निरभ्रं वर्षते सदा ॥१९२॥

ज्येष्ठे मासि सिते पक्षे आर्द्रादौ दशतारकाः ।
सजला निर्जला देवि निर्जला सजला भवेत् ॥१९३॥

ज्येष्ठस्य प्रतिपच्छुक्ले सूर्यस्यास्तं गते यदि ।
द्वितीयायां निरीक्ष्यन्ते चन्द्रं तद्वा[2] महर्षिणः[3] ॥१९४॥

अलिसिंहे[4] धनु[5]श्चैव सुलाभः कन्यकाकुले[6] ।
दक्षिणेभ्युन्नतो मीने मेषे कुम्भे बृषे समः ॥१९५॥

मिथुने च मृगे देवि उत्तरेऽत्युन्नते शशी ।
धनुकर्के रवौ श्लाघ्यो[7] न चेन्दुरशुभं भवेत् ॥१९६॥

---

१. जलशोषं *ध* अन्यत्र जलशोकं ।
२. तद्वासा '*अ*' ।
३. महीर्षणः '*अ*' महीर्षर्णः '*व*'
४. असिंहे *अ* ।
५. त्वधनुश्चक्र *अ* ।
६. [तुले]
७. श्लेषा *अ* ।

विद्रमं च समं चन्द्रे सुभिक्षं चोत्तरोन्नतेः ।
शूलरोगं भयं कुर्याद्दुर्भिक्षं दक्षिणोन्नतं ।।१९७।।

ज्येष्ठस्य शुक्लपञ्चम्यां गर्जितं श्रूयते यदि ।
दक्षिणस्यां भवेद्वायुरभ्रच्छन्नं यदा भवेत् ।।१९८।।

धान्यानां संग्रहं कार्यं आश्विने त्रिगुणो भवेत् ।
ज्येष्ठस्य च सिताष्टम्यां चत्वारो वायुधारणम् ।।१९९।।

ज्येष्ठस्य शुक्लपक्षस्य शृणु देवि कथामिमाम् ।
एकादश्यां तदा देवि पूजां कुर्यात् सुशोभनाम् ।।२००।।

शुभ्रमण्डलकं कृत्वा[1] पुष्पैर्धूपैरलङ्कृतम ।
तेषु स्थानेषु संस्थाप्य महादण्डं महाध्वजम् ।।२०१।।

अन्येन[2] च विधानेन शोधयेत् कालनिर्णयः ।
एको वातो यदा याति[3] चतुर्दिनानि चोत्तरे ।।२०२।।

वर्षितं चतुरो मासा ध्रुवं वर्षति माधवः ।
विपरीतं यदा वापि[4] यानि चिह्नानि वायुभिः ।।२०३।।

तानि चिह्नानि वर्षन्ति प्रावृट्काले न संशयः ।
यदा तु पश्चिमं वातो जायते च चतुर्दिनम् ।।२०४।।

अनावृष्टिर्विजानीयात् दुर्भिक्षं रौरवं यदा ।
उत्तरे दक्षिणे देवि चतस्रो दिशि वा गतः ।।२०५।।

---

१. दत्वा ध ।

२. कृत्वानेन ध, स ।

३. [वाति] ।

४. [वाति]

रविमार्गपरिभ्रष्टं श्रृणु तल्लक्षणं[1] प्रिये ।
शीतकाले भवेद्वृष्टिं वर्षाकाले न विद्यते ।।२०६।।

समवाते भवेत्साम्यं वर्षाकाले विनिर्दिशेत् ।
वायव्यं पश्चिमं देवि नैर्ऋत्यां वा यदा तदा ।।२०७।।

आषाढे श्रावणे छिद्रं द्वौ[2] मासौ वृष्टिरुत्तमा ।
पूर्वस्यां वा तथैशान्यां आग्नेयां वा यदा तदा ।।२०८।।

भाद्रपदाश्विनौ छिद्रमुत्तमाषाढ़श्रावणौ ।
वैशाखे रोहिणीयोगं ज्येष्ठाषाढ समुद्भवम् ।।२०९।।

अवृष्टिर्हन्यतेऽप्यम्भौ समेघैवृष्टिकारणम् ।
सुभिक्षं जायते नूनं न च ईति[3] भयं भवेत् ।।२१०।।

अनभ्रे मध्यमावृष्टिवृष्टिपातो तथोत्तमाः ।
विरभ्रे[4] न च ऋक्षस्य रोहिणीन्दु समागमम्[5] ।।२११।।

सुभिक्षं प्रथमे स्वांशे द्वितीये सर्पकीटकाः ।
तृतीयांशेषु गे देवि मध्यमावृष्टिमादिशेत् ।।२१२।।

चतुर्थे मन्दवृष्टिः स्यात् सर्वशस्यानि पञ्चमे ।
षष्ठे माषाश्च मुद्गाश्च तुषधान्यानि सप्तमे । २१३।।

---

१. तस्यापि लक्षणं ध, स ।
२. मासे वृष्टिश्च उत्तममिति धं विहाय सर्वत्र ।
३. अतिवृष्टिरनावृष्टिः शलभाः मूषकाः शुकाः ।
प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ।।
निरातंका निरीतयः—रघु० १/६३
४. [निरभ्रे] ।
५. समागमे ध, स ।

अष्टमेषु यदा वृष्टिः छिद्रवृष्टिसमादिशेत् ।
न माघे पतितं शीतं ज्येष्ठे मूलं न वृष्टिकृत् ॥२१४॥

नार्द्रायां पतितं तोयं दुष्टकालस्तदा भवेत् ।
ज्येष्ठस्य पूर्णमास्यां तु मूलं[1] प्रश्रवते यदि ॥२१५॥

षष्टिघस्रा न वर्षन्ति पश्चाद्वर्षति माधवः ।
ज्येष्ठस्य मासे बहुलस्य पक्षे नक्षत्रयुग्मं श्रवणं धनिष्ठा ॥२१६॥

गर्जन्ति वर्षन्ति च विद्युदाभ्रं तावच्छुभं याति च गर्गभाषितम् ।
ज्येष्ठे चापरपक्षेषु द्वे ऋक्षे श्रवणादिके ॥२१७॥

अवर्षते नैव वृष्टिः स्याद्वर्षितं वृष्टिदं सदा ।
यदानो[1] संख्यया वृष्टिर्वृष्टिरोधं विनिर्दिशेत ॥२१८॥

अस्तस्थाने रवौ ज्येष्ठे अमावास्यां वीक्षिचिह्नितम् ।
तदुत्तरे भवेदिन्दुरस्तं चेन्न शुभं भवेत् ॥२१९॥

ज्येष्ठे मासि अमावास्यां पूर्णमास्यां अथापि वा ।
दिवा वा यदि वा रात्रौ मेघो भवति चाम्बरे ॥२२०॥

अनावृष्टिर्भवेत्तत्र नात्र कार्या विचारणा ।

## इति ज्येष्ठफलम्

## [ अथाषाढफलम् ]

### ईश्वर उवाच

आषाढेषु च मासेषु रोहिणीयोगमुत्तमम् ।
यद्यभ्रं विद्युदम्भो वा कालं निष्पद्यते तदा ॥२२१॥

---

१. शुक्लं अ ।
२. यामानां अ ।

विनष्टे रोहिणीयोगे न पूर्वं चोत्तरानिलः ।
वर्षंत्युश्च[१] गृहाद्रामात्प्रज्ञा[२] तत्रापि लक्षणम् ।।२२२।।

माघे च फाल्गुने चैत्रे वैशाखज्येष्ठयोस्तथा ।
स्वातीयोगं विजानीयात् आषाढेषु तथैव च ।।२२३।।

आषाढे स्वातिनक्षत्रे जलयोगः स्फुटं भवेत् ।
यद्यभ्रं वातविद्युद्धि धान्यनिष्पत्तिकारणम् ।।२२४।।

आषाढमासे प्रथमे च पक्षे निरभ्र दृष्टे रविमण्डले च ।
न विद्युतो गर्जति नैव वृष्टिमासद्वयं वर्षति नैव मेघः ।।२२५।।

आषाढशुक्लपञ्चम्यां पश्चिमे यदि मारुतः ।
गर्जिते वर्षिते वापि इन्द्रचापं[३] च नश्यते ।।२२६।।

मेघरुद्धं दिशः सर्वा दृश्यते धनुषान्विता ।
सर्वधान्यानि संग्राह्यं तदा मास चतुष्टयम् ।।२२७।।

कार्त्तिके द्विगुणो लाभो भवत्येव न संशयः ।
नवम्यां यदि वाषाढे शुक्लायां निर्मलो रविः ।।२२८।।

उदये वाऽथ मध्याह्ने घनैः छन्नैस्तथास्ति मे ।
वर्षते चतुरो मासान् विपर्यासे विपर्ययम् ।।२२९।।

एवं देवि समायोगं मयाख्यातं सुनिश्चितम् ।
यावती भुक्तिराषाढे शुक्लप्रतिपदा दिने ।।२३०।।

---

१. वृषामुश्च *ध* ।

२. प्रख्यातं ऋषिलक्षणम् ।

३. इन्द्रवायुं प्रदृश्यते *अ* ।

पुनर्वसौ अमावास्या वृष्टिः स्यात्तावती स्फुटम् ।
आषाढे मासि संक्रान्तौ यदा वर्षति माधवः ।।२३१।।

व्याधिरुत्पद्यते घोरां श्रावणे शोभनस्तदा ।
आषाढे तु यदा देवि द्वादश्यां प्रतिपद्दिने ।।२३२।।

पूर्णमास्यामवाश्यां महावातं विनिर्दिशेत् ।
तदा देवि भवेन्नित्यं देवो वर्षति यत्नतः ।।२३३।।

वर्षाकाले त्रिमासेषु नक्षत्रं वर्षते[1] स्फुटम् ।
तिथिस्तु वर्द्धते तत्र ध्रुवं कालो विनश्यति ।।२३४।।

ऋक्षातिरेकमासस्य सौख्यानि च प्रवर्तते ।
प्रभाते पश्चिमेन्द्रस्य धनुषं यदि दृश्यते ।।२३५।।

वारुणं चैव नक्षत्रं शीघ्रं वर्षति माधवम् ।
आषाढे तु घटीषठ्ष्यां मासद्वादशनिर्णयः ।।२३६।।

पञ्चनाडीभवेन्मासः षष्ठ्या[2] वर्षस्य निर्णयः ।
सर्वरात्रौ यदाभ्रानि वातौ पूर्वोत्तरे यदि ।।२३७।।

यस्मिन् काले न वर्षन्ति पुष्टा[3] नायाति मासितम् (?) ।
यत्र मासविभागेन निर्मलं जायते प्रिये ।।२३८।।

नाभ्रं नभो न मेघस्य वातौ पूर्वोत्तरो न हि ।
न वर्षते तदा देवि दुष्टकालस्तदा वदेत्[4] ।।२३९।।

---

१. वर्द्धते *ध, व* ।

२. षष्ठ्यां वर्षति निर्णयः ।

३. पुष्टा जायातिरिक्षीतं "*ध, स*" ।

४. तदा *ध* ।

यत्र मासविभागेन निर्मलं दृश्यते नभः ।
तत्र हानिश्च वृष्टिश्च विज्ञेयं गर्गभाषितम् ॥२४०॥

यत्राभ्रं पञ्चनाडीषु वातौ पूर्वोत्तरौ यदि ।
तस्मिन् मासे सुविज्ञेया वृष्टिर्भवति भूयसी ॥२४१॥

तत्रादौ च विजानीयात् पवनाभ्रादि मानतः ।
षष्ठ्याभिरहितैरेभिः पूर्णिमा शुभदायिनी ॥२४२॥

दिनरात्रिविभागेन यदाभ्रानि भवन्ति चेत् ।
तस्मिन् काले सुवृष्टिः स्याद् भुक्तनाडीप्रमाणतः ॥२४३॥

येषु मासेषु ये दग्धा गर्भाः पौषादि सम्भवाः[1] ।
[तत्रादौ[2] पञ्चनाडीषु चन्द्रो भवति निर्णयः ॥२४४॥]

[पौषादि[2]सम्भवेद्गर्भं ध्रुवमुत्पात-संभवः ।]
तेनाषाढी दिनं सर्वं द्रष्टव्यं वृष्टिहेतवे ॥२४५॥

यदाषाढी दिने रात्रिरभ्रैर्वातैश्च धारितम् ।
तदा गर्भो शुभो ज्ञेयो शीतकालेऽपि सर्वदा ॥२४६॥

एकमेव दिनं प्रेक्ष्य[3] कालनिष्पत्तिहेतवे ।
अष्टयामाभ्रवातौ च वृष्टिं[4] यावत्तदा शुभम् ॥२४७॥

आषाढ़ीपूर्णिमारात्रौ यदि चन्द्रं न पश्यति ।
चतुरोऽपि तदा मासा जलं वर्षति माधवम् ॥२४८॥

---

१. मानवाः ध ।
२. [ ] अं विहाय, सर्वत्र पाठाभावः ।
३. प्रोक्तं ध ।
४. वृष्टिं पात तदा अ ।

चतुर्दशी तथाषाढी हीनवर्षा यदा भवेत् ।
भाद्रश्रवणातो[1] ग्राह्यं समर्घं च समे समम् ॥२४६॥

अन्यं च कथयिष्यामि तिथिगर्भंश्च उत्तमम् (?) ।
आषाढ़शुक्लपक्षस्य चतुर्थी पञ्चमी तथा ॥२५०॥

षष्ठी च सप्तमी देवि अमावास्या प्रतिपदा ।
स्वयमेव भवेद्गर्भो वर्षते नात्र संशयः[2] ॥२५१॥

शुचौ कृष्णचतुर्थ्यां तु उदयेत्[3] पुच्छतो रविः ।
त्रिमासं पक्षसंयुक्तं तदा वर्षति माधवः ॥२५२॥

शुचौ कृष्णचतुर्थ्यां च तुषारान्नपि पातयेत् ।
जलपक्षं तदा सर्वं स्वस्थं भवति भूतलम् ॥२५३॥

शुचौ कृष्णचतुर्थ्यां तु भग्नं भास्करमण्डले ।
न वर्षते तदा देवि सदा कष्टतरं जलम् ॥२५४॥

कृष्णाषाढचतुर्थ्यान्तु पूर्वभाद्रपदा भवेत् ।
तदा वर्षति पर्जन्यः प्रवृट्काले सदा प्रिये ॥२५५॥

न[4] तां भाद्रपदा मन्ये जलं देवि न वर्षति ।
एवं देवि समायोगं मयाख्यातं तव प्रिये ॥२५६॥

अभ्राणि पीतवर्णानि कृष्णवर्णानि पार्वति ।
पश्चिमे चैव संध्यायां एते देवि भविष्यति ॥२५७॥

---

१. गर्भश्रावो न तद्धानं महर्घं *ध* ।
२. संभवः *अ* ।
३. उद्यत् प्रच्छादितो रविः *अ* ।
४. नोत्तराभाद्रपदा *व* ।

आषाढे दशमी कृष्णा सुभिक्षाय च स रोहिणी ।
एकादशी तु मध्यस्या द्वादशी कालभञ्जिनी ।।२५८।।

किं च सन्तादिभिर्योगं तदा धात्रीजलप्लुता[1] ।
आषाढ़े नवमी देवि दशम्यां च यदा भवेत् ।।२५९।।

साद्धं गर्जति अम्भोदैर्नदी दूरे गृहं कुरु ।
चतुरोऽपि तदा मासाज्जलं वर्षति माधवः ।।२६०।।

तस्मिन्दिनेऽथ सूर्यो वै निर्मलं दृश्यते नभः ।
तत्र तोयं न पश्यामि वर्जयित्वा महानदीं ।।२६१।।

आषाढीपूर्णिमायान्तु पूर्ववातो यदा भवेत् ।
निष्पत्तिः सर्वधान्यानां आरोग्यं च भविष्यति ।।२६२।।

आषाढीमग्निवातं चेदस्थिशेषा मही तदा ।
आषाढीपूर्णिमायान्तु दक्षिणे यदि मारुतः ।।२६३।।

सकूपेषु तडागेषु तथा निर्झरनेषु च ।
तदा न दृश्यते तोयं देवि देवो न वर्षति ।।२६४।।

आषाढ़ीपूर्णिमायान्तु नैर्ऋत्यां यदि मारुतः ।
विक्रयित्वा तदा सर्वं कर्त्तव्यं धान्यसंग्रहम् ।।२६५।।

मासे तु पञ्चमे देवि लाभस्तु द्विगुणो भवेत् ।
आषाढीपूर्णिमायान्तु पश्चिमे यदि मारुतः ।।२६६।।

निष्पत्तिः सर्वधान्यानां लोके वर्षति माधवः ।
आषाढीपूर्णिमायान्तु वायव्यां यदि मारुतः[2] ।।२६७।।

---

१. जलप्लुता *व*, तलस्तुता *स*, फलस्तुता *अ*, ।

२. नकुलाः शलभाश्चैव मशकाश्च पतन्ति वा आषाढ़ी पूर्णिमायान्तु उत्तरे यदि मारुतः ।। *ध*, *व*, मातृकयोः अधिकः ।

धर्मशीलास्तदा लोका धन-धान्यं गृहे गृहे ।
आषाढ़ीपूर्णिमायान्तु ईशाने यदि मारुतः ॥२६८॥

गीतवाद्यरतालोकाः सुभिक्षं प्रलयं[१] भवेत् ।
आषाढीपूर्णिमायान्तु चतुर्दिक्षु च मारुतः ॥२६९॥

धान्यानि च महर्घानि वह्निदाहो प्रकीर्तितः ।
आषाढी त्वधिका तस्य समर्घं तु तदा मतः ॥२७०॥

सम्वत्सरं वर्त्तमानं शून्यपातं सुनिष्फलम् ।
निर्वाता गगना देवि यदाषाढस्य पूर्णिमा ॥२७१॥

तदा तु सर्वमेदिन्यां जलं नास्तीति कथ्यते ।
पूर्णिमार्हनिशं देवि इह चिह्नं प्रदृश्यते ॥२७२॥

अस्तं गच्छति तीक्ष्णांशुः शस्योत्पत्तिरुत्तमा ।
आषाढीपूर्णिमाषाढे वर्षं यावच्छुभो भवेत् ॥२७३॥

आवर्त्तधान्यनिष्पत्तिः प्रजासौख्यमविग्रहम् ।
मूलमुत्तरधिष्ण्येन पूर्णमासी यदा भवेत् ॥२७४॥

अन्नर्षं मध्यमं धान्यं देशं सर्वत्र दृश्यते ।
एतच्च परमं गुह्यं गर्भाधान[२]समुद्भवम् ॥२७५॥

विद्युत्संयोगजं सर्वं न देयं यस्य कस्यचित् ।
आषाढीपूर्णिमायां तु यदीन्दुग्रहणं भवेत् ॥२७६॥

तदा च सर्वधान्यानां संग्रहः कारयेद्बुधः ।
मासार्धे द्विगुणो लाभो जायते सुरपूजिते ॥२७७॥

---

१. प्रबलं ध ।
२. सर्वघात ध ।

न चात्र संशयः कार्यः मयाख्यातं तव प्रिये ।

**[ अथ जलयोगः ]**

वर्षाकाले गते भानौ रौद्रर्क्षे यदि पार्वति ॥२७८॥
जलयोगस्तदा चिन्त्यो वृष्ट्यर्थे च प्रयत्नतः ।
एकनाडीसमायुक्तौ चन्द्रमाधरणीसुतौ ॥२७९॥
यदि तत्र भवेज्जीवस्तदा एकार्णवा मही ।
बुधशुक्रसमीपस्थः करोत्येकार्णवां महीम् ॥२८०॥
तयोरन्तर्गते भानुः समुद्रमपि शोषयेत् ।
हस्तत्रयं तथा मूलं पूर्वात्रयं च रेवती ॥२८१॥
भरणी चोत्तरात्रीणि रोहिणी जलयोगभम् ।
मकरस्थश्च माहेयः वृषस्थश्च दिवाकरः ॥२८२॥
ज्येष्ठामूलगतः शुक्रः समुद्रमपि शोषयेत् ।
अश्लेषायां गतो भानुः प्लावयेत्पर्वतानपि ॥२८३॥
यदि चित्रा भृगौ प्राप्तिः समुद्रमपि शोषयेत् ।
तामापतन्तीं कुरुराजसेनां समुद्रवेलामिव दुर्निवारयम् ॥२८४॥
निवारयत्येकरथेन पार्थश्चित्रागते शुक्रमिवाम्वुवृष्टिम् ।
यदा भौमश्च चन्द्रश्च देवतानां पुरोहितः ॥२८५॥
एकराशिगतो देवि तदा मेघा जलप्रदा ।
चलत्यङ्गारके वृष्टिरुदये च वृहस्पतौ ॥२८६॥
शुक्रश्चास्तमये वृष्टिः त्रिधा[1] वृष्टिः शनैश्चरे ।
व्रजति यदि कुजपतङ्गः मार्गे घटमिव भिन्नतलं जलं ददाति ॥८७॥

---

१. त्रिधा-वृष्टिः—उदयं, अस्तं, राशिचलितम् ।

अथ भवति दिवाकराग्रश्चेत्प्रलयघनानपि शोषयेदवश्यम् ।
उदयास्तमये मार्गे वक्रयुक्ते च संक्रमे ॥२८८॥

जलराशिगताः खेटाः महावृष्टिप्रदा ग्रहाः ।
विशाखाद्यं नपुंसाख्यं मूलात्पुंशाश्चतुर्दश: ॥२८९॥

आर्द्रादौ दशऋक्षाणि देवि योषित् प्रकीर्तिताः ।
पुंसा योषित् महावृष्टिः षण्डे योषां भवेत्क्वचित् ॥२९०॥

द्वन्द्वे स्त्री शीतलं ज्ञेयं उभयोः पुरुषेन च ।
आषाढे नैव वृष्टिः स्यात् तदा किं च कृतं बुधैः ॥२९१॥

भविष्यन्ति वरौ योगः श्रावणे सप्तमी दिने ॥२९२॥

इति आषाढफलम्

## [ अथ श्रावणफलम् ]

ईश्वर उवाच

सप्तम्यां श्रावणे देवि यदास्तं व्रजते रविः ।
न वृष्टिर्यदि पर्जन्यो जलशामुञ्च सर्वथा[1] ॥२९३॥

चित्रा स्वातिविशाखासु यस्मिन् काले न वर्षति ।
तन्मासे निर्जला मेघा यदि वर्षंत्यवर्षति ॥२९४॥

श्रावणे कृष्णपक्षे तु वायुर्वा भाद्रपदा भवेत् ।
चतुर्थ्यां यदि वर्षन्ति तदा वर्षति माधवः ॥२९५॥

---

१. चित्रास्वातिविशाखापु श्रावणे नो जलं यदि ।
तदा जलादिकं दुःखं संकष्टमपि सेवनम् ॥
इति पाठः ध, व, स मातृकासु ।

श्रावणे शुक्लसप्तम्यां स्वातीयोगे जलं भवेत् ।
निष्पत्तिः सर्वशस्यानां प्रजा च निरुपद्रवः ॥२९६॥

श्रावणे शुक्लसप्तम्यां चास्तं गच्छति भास्करः ।
न वृष्टिर्यदि पर्जन्यो जलशामुञ्च सर्वथा ॥२९७॥

श्रवणायां तु अमावास्यां गर्भमुत्पद्यते यदा ।
उत्तरे कृष्णमेघस्यापूर्वं देवि तथैव च ॥२९८॥

श्रावणीपूर्णिमास्यां तु श्रावणार्क्षे जलं भवेत् ।
सुभिक्षं च समादेश्यं तस्मिन् वर्षे न संशयः ॥२९९॥

श्रावणे मासि संक्रान्तौ यदा वर्षति माधवः ।
बहुशस्या भवेत्पृथिवी प्रजासौख्यमविग्रहम् ॥३००॥

श्रावणे पूर्णिमायां तु यदीन्दुग्रहणं भवेत् ।
घृतं तैलं तथा धान्यं संग्रहेच्च विचक्षणैः ॥३०१॥

मासे चाश्वियुजे देवि द्विगुणं लाभमादिशेत् ।
दुर्भिक्षं जायतेऽवश्यं मयाख्यातं तव प्रिये ॥३०२॥

श्रावणे शृणु देवेशि येन जानन्ति पण्डिताः ।
श्रावणे शुक्लसप्तम्यां दशम्येकादशीदिने ॥३०३॥

पूर्णिमासी द्वितीयादि यावद्भवति पञ्चमी ।
मध्याह्ने जलसंभूते संध्याकालेषु पार्वति ॥३०४॥

पश्चिमे दिवसे भागे[1] जायते नात्र संशयः ।
त्रिरात्रं वर्षते मेघः प्रभाते विमलं भवेत् ॥३०५॥

---

१. भाद्रे 'अ' ।

अमावास्यां भवेच्चैव श्रावणे परमेश्वरि ।
गर्भमुत्पद्यते तस्मिन्नुत्तरे कृष्णमालिका ।।२०६।।

भवन्ति पर्वताकारं धूम्रवर्णा सुरेश्वरि ।
पीतवर्णा यदा मेघाः सन्ध्याकालेषु जायते ।।२०७।।

सविद्युतो भवेद्वृष्टिः शुभं मारुतिभिर्युतः (?) ।
सार्कश्चन्द्र नभश्छन्नो धारणादशुभ उच्यते ।।२०८।।

मौक्तिकं शंखवर्षासु शुभं वायु क्रिया प्रिये (?) ।
पक्षिभिः सुखदा वाचं क्रीडयामास जलादिषु ।।२०९।।

इति श्रावणस्यफलम्

## [ अथभाद्रफलम् ]

ईश्वर उवाच

शृणु[1] वक्ष्यामि देवेशि ये न जानन्ति पण्डिताः ।
चतुर्थी शुक्लपक्षस्य पञ्चम्यां चैव सुन्दरि ।।२१०।।

सप्तमी वाष्टमी चैव पूर्णिमायान्तु जायते ।
एकत्र संघिका चैव भवेत्पर्वतमालिका ।।२११।।

दशपञ्चदिनं देवि एतानि तिथयस्तथा ।
गर्भते नात्र सन्देहो वर्षते सप्तरात्रकम् ।।२१२।।

इत्येवं कथितं देवि यादृशं गर्भलक्षणम् ।
एकमेघार्णवा चैव पृथ्वी भाद्रपदे भवेत् ।।२१३।।

---

१. यत्फलं शृणु देवेशि स ।

मासे भाद्रपदे देवि संक्रान्तौ यदि वर्षति ।
वहुरोगास्तदा प्रोक्ता आश्विने नैव वर्षति ॥३१४॥

एकमासे क्रूरवाराः नैव पञ्चशुभावहा ।
अमावास्यार्क वारेण महर्घानि भवन्ति हि ॥३१५॥

यदा भाद्रपदे मासे प्रतिपद्दशमीतिथौ ।
सप्तमी पूर्णिमा देवि नवमी च यथाक्रमम् ॥३१६॥

यदा मेघं च पश्यामि पश्चिमं दिशि मिश्रितम् ।
तावद्वर्षति सततं बहूदकं विनिर्दिशेत् ॥३१७॥

मास[1]क्षात् पूर्णिमा हीना समाना यदि वाधिकः ।
समर्घं च समार्घा च महर्घं च क्रमाद्भवेत् ॥३१८॥

## इति भाद्रफलम्

## [ अथाश्विनफलम् ]

### ईश्वर उवाच

सप्तमी चाश्वियुक्मासि सिताष्टमी जलान्विताः ।
सुभिक्षं तत्र आदेश्यं राजानं शान्तिविग्रहः ॥३१९॥

यदा चाश्वियुते मासि प्रतिपद्दशमीषु[2] च ।
तथैव चैव (?) चाष्टम्यां मेघागमनचाम्बरे ॥३२०॥

---

१. मासस्यात् अ ।

२. सप्तमीषु अ ।

क्षिप्रवृष्टिं विजानीयादग्रे काले भविष्यति ।
आश्विने कथिते[१] देवि यादृशं वृष्टिलक्षणम् ॥३२१॥

सन्ध्याकालेषु ये मेघाः पर्वताकारसन्निभा ।
आदित्यास्तमने तत्र अहोरात्रं प्रवर्षति ॥३२२॥

इत्याश्विनस्यफलम्

इति श्रीरुद्रयामले सारोद्धारे उमामहेश्वरसम्वादे मेघमालायां स्वरुपवृष्टिफलाध्यायः ॥८॥

---

१. कथ्यते *ध, व, स* ।

## प्रक्षिप्तः पाठः

[1]अथाग्यत्सम्प्रवक्ष्यामि चक्रं च सप्तनाडिकम् ।
येन विज्ञानमात्रेण वृष्टिं जानन्ति साधवः ॥१॥

कृत्तिकादि लिखेद्भानि साभिजिच्च क्रमेण च ।
सप्तनाडीव्यधस्तत्र कर्त्तव्यः पन्नगाकृतिः ॥२॥

तेषां नामान्यहं वक्ष्ये तथा चैव फलानि च ।
कृत्तिका च विशाखा च मैत्राख्यं भरणी तथा ॥३॥

ऊर्ध्वाद्या शनि नाडी सा चण्डवाय्वाभिधामतः ।
रोहिणी स्वातिज्येष्ठाश्वि सु अद्वितीया नाडिका ॥४॥

मता आदित्य प्रभवा नाडी वायुस्तथैव च ।
सौम्यं चित्रा तथा मूलं पौष्णऋक्षं चतुर्थकम् ॥५॥

तृतीयाङ्गारका नाडी दहनाख्यास्तथैव च ।
रौद्रहस्तं तथा पूर्वाषाढ़ा भाद्रपदोत्तरा ॥६॥

चतुर्थी जीवनाडी स्यात्सौम्या नाडी प्रकीर्तिता ।
पूनर्वसूत्तरा फाल्गुन प उत्तराषाढश्च तारकाः ॥७॥

---

१. श्लो० सं० १ तः ३३ यावत् पाठः केवलं *अ* मातृकायामस्ति । प्रायः प्रक्षिप्तोऽयमिति ज्ञायते ।

पूर्वभाद्रश्च शुक्राख्या पञ्चमी नीरनाडिका ।
पुष्यपूर्वा च फाल्गुन्यभिजिच्छततारकाः ॥८॥

षष्ठी च जलनाडी च ध्रुववारस्य स्वामिनः ।
श्लेषार्क्ष मघाकर्णो धनिष्ठाभं तथैव च ॥९॥

अमृताख्या हिमं चन्द्र सप्तमी च रसातला ।
मध्यमार्गे स्थिता सौम्या नाडी तस्याग्रपृष्ठतः ॥१०॥

सौम्ययाम्यग् ज्ञेयं च नाडिकानां त्रिकं त्रिकम् ।
क्रूरयाम्यगता नाड्यः सौम्यासौम्यदिगाश्रिता ॥११॥

मध्यनाडी च मध्यस्था ग्रहरूपफलप्रदा ।
एता नाडी गता वाय्वा ग्रहा क्रूरा शुभा यदि ॥१२॥

ततो नाडी फलं वाच्यं ग्रहैः कृत् शुभाशुभम् ।
ग्रहाः कुर्युः महावातं गता वातर्क्षनाडिका ॥१३॥

वायुर्नाडी गता वायुं दहनादाहदायकाः ।
सौम्या नाडी गता मध्ये नीरस्थाः मेघवाहकाः ॥१४॥

जलपावृष्टिदस्वन्दो नाड़ी गा वेति वृष्टिदा ।
एकोप्येतत्कालदत्ते स्वस्वना संस्थितो ग्रहा ॥१५॥

भूसुतः सर्वनाडीषु धत्ते नाडी भवं फलम् ।
प्राविट् काले समायाते रौद्रर्क्षे च गते रवौ ॥१६॥

नाडीवेधसमायोगे जलयोगं वहाम्यहम् ।
यत्र नाडी स्थिते चन्द्रे तत्र स्थाने चरा यदि ॥१७॥

क्रूरा सौम्ये विमिश्राश्च तद्दिने वृष्टिरुत्तमा ।
एवं ऋक्षासयोर्योगो जायते यदि खेचरैः ।।१८।।

तत्रकाले महावृष्टिः यावत्तस्यांशके शशिः ।
केवलैः सौम्य पापैर्वा ग्रहैर्विद्धो यदा शशि ।।१९।।

तदातिबुद्धयानीयं दुर्दिनं भवति ध्रुवम् ।
यस्य ग्रहस्य नाडीस्थ चन्द्रमास्तद्‌गृहेन च ।।२०।।

दृष्टो युक्तः करोत्यम्बुर्यदि क्षीणो न जायते ।
पीयुषनाडीगश्चन्द्रः सूर्ये खेटा शुभा शुभा ।।२१।।

द्विश्चतु ४ पञ्च५ पानीय निदान्येके१ त्रि३सप्तकम्७ ।
एवं जलाख्यनाडोस्थे चन्द्रमिश्रग्रहान्वितम् ।।२२।।

दिवा द्वि दिव सम्पञ्च दिनानि जायते जलम् ।
नीरनाड़ीस्थिते चन्द्रे तत्रस्थे पूर्ववद्ग्रहे ।।२३।।

याम्ये दिनार्द्धकं त्रीणि दिनानि यदि खेचराः ।
तत्र वृष्टिः क्रमाद् ज्ञेया धृत्यर्करसवासराः ।।२४।।

सौम्या नाडी गतास्सर्वे वृष्टिदास्ते दिनत्रयम् ।
दुष्टानाडी महावाता दुष्टवृष्टिप्रदा ग्रहाः ।।२५।।

निर्जला जलदा नाडी भवेद्योगे शुभाधिके ।
क्रूराधिके समायोगे जलदापि न दायकः ।।२६।।

याम्यनाडी स्थिता क्रूरा अनावृष्टिप्रदायकाः ।
शुभयुक्ता जलं संस्थास्तेऽपि वृष्टिप्रदाः ग्रहाः ।।२७।।

एकनाडीसमाक्रूरौ चन्द्रमाधरणीसुतौ ।
यदि तत्र भवेज्जीवस्तदा वारिमयी मही ॥२८॥

बुधशुक्रौ यदैकत्र गुरुणा च समन्वितौ ।
चन्द्रयोगस्तदा काले जायते वृष्टिरुत्तमा ॥२९॥

[ सप्तनाडीचक्रस्वरुपम् ]

| श | र | भौ | गु | शु | बु | च |
|---|---|---|---|---|---|---|
| चण्डा | वाता | दहना | सौम्या | नीरा | जला | अमृता |
| कृ | रो | मृ | आ | पुन | पु | आश्ले |
| वि | स्वा | चि | ह | उफा | पूफा | म |
| अनु | ज्ये | मू | पू | उ | अ | श्र |
| भ | अ | रे | उभा | पूभा | श | घ |

जलयोगे समायातौ यदा चन्द्रसितौ गृहौ ।
क्रूर दृष्टौ युतौ वापि तदा मेघाल्पवृष्टिदा ॥३०॥

उदयास्तमने मार्गे विक्रयुक्तौ च संक्रमे ।
जलनाड़ीगता खेटा महावृष्टिप्रदा मता ॥३१॥

आर्द्रादौ ३त्रीणि ऋक्षाणि स्वात्यादौ पञ्चमस्तथा ।
पूर्वाषाढश्च चत्वारि उत्तरा रेवती द्वयम् ॥३२॥

एतानि शनि ऋक्षाणि शेषं सूर्यसमाचरेत् ।
सूर्ये सूर्ये भवेद्वायुश्चन्द्रे चन्द्रे नपुंसके ॥३३॥

यदा चन्द्रसूर्य्याभ्यां तदा एकार्णवा मही ॥३४॥

अथ वृष्टिमन्त्रः

ॐ ह्लौं क्रौं स्त्रौं वारुणाय स्त्रौं क्रौं ह्लौं पर्जन्याकर्षय महावृष्टिं कुरु-कुरु ह्लौं फट्-स्वाहा ॥

अयुतमेकं जपेत्। सहस्रमेकं तिलाहुतिं हुनेत्। पूर्णाहुत्या पुरुषसूक्तं अष्टोत्तराहुतिं कृत्वा रुद्राभिषेकं कुर्यात् ॥

॥ इति सप्तनाडीचक्रम् ॥

## नवमोऽध्यायः

### [ अथमेघविद्युद्वातलक्षणम् ]

**ईश्वर उवाच**

अन्यं च कथयिष्यामि श्रृणु तत्त्वेन भामिनि ।
मेघविद्युत्समायोगं ये न जानन्ति पण्डितैः ॥१॥

पूर्वस्यां दिशि संध्यायां यदा[1] मेघाकुलं नभः ।
कश्चिदुष्ट्रसमाकारं कश्चिद्हस्ति समं प्रिये ॥२॥

केचित्सिंहसमाकारं केचित्पर्वतसन्निभम् ।
केचिन्मकरसादृश्ये केचिन्मृगसमं प्रिये ॥३॥

एवमेव यदा[2] मेघः पञ्चरात्रं प्रवर्षति ।
विज्ञेयं सप्तरात्रिर्वा वृष्टिर्वर्षति माधवः ॥४॥

उत्तरे न तु सन्ध्यायां दृश्यते[3] नगमालिका ।
अम्बुदा सदृशा मेघा यदा दृश्यति[4] पार्वति ॥५॥

---

१. परा अ ।
२. परा अ ।
३. दृश्ये पर्वत मालिका अ ।
४. एष प्रयोगोऽपाणिनीयः ।

वर्षते सप्तरात्राणि इति भैरवभाषितम् ।
मकरैः सदृशो मेघः यदा देवी प्रपश्यति ॥६॥

वर्षंते च त्रिरात्रेण सप्तरात्रमथापि वा ।
आग्नेयां च यदा मेघो दृश्यते सुरवन्दिते ॥७॥

रात्रौ वर्षंति जीमुत्त भैरवेनेति भाषितम् ।
ईशाने च यदा मेघा जायते कृष्णपर्वतः ॥८॥

वर्षन्ति चार्द्ध[1]रात्रेण सन्ध्याकालेऽथवा प्रिये ।
वायव्यां तु यदा मेघा जायते वरवर्णिनी ॥९॥

वातवृष्टिर्विजानीयात् रात्रौ[2] स्यात्प्रहरादिने ।
मेघस्तु कथितो देवि दिशा अष्टौ प्रकीर्तिता ॥१०॥

वायुधारणमेघं च शृणु तत्त्वेन सुन्दरि ।
वायुर्लक्षणं विज्ञेयं पूर्वादौ यत्फलं भवेत् ॥११॥

सुभिक्षं पूर्ववातेन जायते नात्र संशयः ।
दक्षिणे तु क्षेमकरं नैर्ऋत्यां दुखदो भवेत् ॥१२॥

वारुण्यां दिव्यधान्यानि वायव्यां पुरुषे भयम् ।
उत्तरे शुभदा देवि ऐशान्यां सर्वसम्पदा ॥१३॥

इति मेघवासफलानि

---

१. यदामेघो *ध* ।

२. दश्रो *अ* ।

[ अथ विद्युत्फलम् ]

दायुधारणमेघानि कथितं त्वयि सुन्दरि ।
विद्युल्लक्षणचिह्नानि दिशाष्टौ पूर्वतः वदेत्[1] ॥१४॥

पूर्वविद्युत्करा मेघा आग्नेयां जलशोषणम् ।
दक्षिणे रौरवं घोरं नैर्ऋत्यां भयमादिशेत् ॥१५॥

सुभिक्षं पश्चिमे नैव वायव्यां सुखसम्पदा ।
उत्तरे वर्षते मेघो ईशाने विजयी भवेत् ॥१६॥

इति श्रीरुद्रयामले सारोद्धारे उमामहेश्वरसंवादे मेघमालायां
मेघविद्युद्वातफलाध्यायः नवमः ॥९॥

१. फलं ध, व ।

# दशमोऽध्यायः

[ अथ मेघाह्वानविधिः ]

ईश्वर उवाच

यदि देवाः[1] न वर्षन्ति शृणु सुन्दरि तत्त्वतः ।
आकर्षणमन्त्रयन्त्राणि पूजा चैव विशेषतः ॥१॥

दिशो मेघसमाह्वानं ये न जानन्ति पण्डितैः ।
अमदा प्रमदा देवि शुभदो महिषस्तथा ॥२॥

चण्डिकासिंहनादश्च वराहो महिषस्तथा ।
एते मेघास्तु विख्याता पूर्वस्यां दिशि संस्थिता ॥३॥

आनन्दो कालदण्डश्च शूकरो वृषभस्तथा ।
धूम्रोऽथ मुशलश्चैव नीलजीमूतमेव च ॥४॥

एते मेघास्तु विख्याता दक्षिणां दिशमाश्रिताः ।
कुञ्जरो कालमेघश्च यमनः कालशान्तिकः ॥५॥

---

१. [देवो] ।

दुन्दुभिर्लेखको देवि शंभो[1] मकरछत्रभिः ।
मृगनाभिः त्रिनेत्रश्च दशमेघाः प्रकीर्तिताः ॥६॥

एते मेघास्तु विख्याता पश्चिमं दिशमाश्रिताः ।
चण्डीशो भैरवो देवि स्वस्तिको[2] भैरवस्तथा ॥७॥

राजनन्दो वृषश्चैव गृध्ररोमस्तथैव च ।
एते मेघा उत्तरस्थाः कथिता तव सुन्दरि ॥८।

ॐ कारो नन्दमृत्युश्च मधुरो श्रियकस्तथा ।
चण्डिकान्तः किरातश्च किरणौ संभवस्तथा ॥९॥

हेमाभा पर्वताभा च वह्निभयनृपस्तथा ।
द्वादशमेघविख्याता२ चत्वारो दिशि संस्थिताः ॥१०॥

अन्यच्च श्रृणु देवेशि ये न जानन्ति पण्डिताः ।
मेघाह्वानं करिष्यन्ति यत्र स्थानं प्रतिष्ठितम् ॥११॥

कान्त्या नाम नगर्य्यां च सबुधो मेघ उच्यते ।
तत्तत्स्थाननिवासिभिस्तथैवाह्वानं कारयेत् ॥१२॥

द्वारावती नगर्य्यां च कन्यदो मेघ उच्यते ।
तत्रस्थान निवासी च आगच्छ त्वरितादृतः ॥१३॥

माया नाम नगर्य्यां च अम्बुदश्च पृथुश्रवाः ।
तत्र स्थान निवासी च अत्रैवाचक्ष मे प्रभो ॥१४॥

वाराणसी नगर्य्यां च वासुकी मेघ उच्यते ।
तत्रैवाधिपतिर्देवि तस्यामावाहनं चरेत् ॥१५॥

---

१. शुभो व ।
२. कोमलकस्तथा ध, व ।

मथुरायां सुरेशानि तक्षको मेघ उच्यते ।
तत्रस्थाननिवासिनं ध्रुवमावाहयाम्यहम् ॥१६॥

अवन्ती नगराधीशं विकर्त्तनो वलाहकः ।
आवाहयेत्तु देवेशं तत्तत्स्थाननिवासिनम् ॥१७॥

वैश्यनामनगर्य्यां च सारम्बुदो पयोधरः ।
तत्तत्स्थाननिवासिभिः तस्यामावाहनं चरेत् ॥१८॥

श्रोणितं नाम नगरी हेममालीपयोधरः ।
आवाहयेत्तु देवेशि तत्तत्स्थाननिवासिभिः ॥१९॥

कुरुक्षेत्रे महाक्षेत्रे जलेन्द्रो[1] मेघ उच्यते ।
तत्तत्स्थाननिवासिनामचिरं[2] तत्र पूजनम् ॥२०॥

हस्तिनापुरनगरे वज्रदंष्ट्रो वलाहकः ।
तत्रस्थाननिवासिनामधुना वाहयाम्यहम् ॥२१॥

हस्तिनापुरनगर्य्यां च वृषभश्च धनन्तथा ।
तस्यैवाह्वानमुचितं[3] तत्तत्स्थाननिवासिनाम् ॥२२॥

**दधि उदधि क्षरुक्षीरु नषु चित्र विचिषु विंमन्दिरु मैनाकोचि त्रिषु अविद्वाजुमो हेमं बन्धुविषट् ॥**

अथ मेघाह्वानमन्त्रः[4]

---

१. जलदो '*अ*' ।

२. उचितं *ध* ।

३. मुञ्चन्ति *अ* ।

४. मेघादान *अ* ।

ॐ ह्रीं मेघद्वितीयो[1] यमः । वले[2] स्वाहा ।।

[इति] प्रथममन्त्रः ।

ॐ ह्रीं मेघद्वितीयकलनामकं स्वाहा । ॐ ह्रीं मेघद्वितीय कमलोद्भवाय नमः ।।

[इति] द्वितीयमन्त्रः

ॐ ह्रीं महानिध[3]राय हिमवन्तवासिने मेघराजाय स्वाहा । अधरनिवासिने मेघराजाय स्वाहा ।

[इति] तृतीयमन्त्रः

ॐ ह्रीं नन्दिकेशराजाय मेघराजाय अधरनिवासिनाय मेघराजाय स्वाहा ।।

[इति] चतुर्थमन्त्रः

ॐ ह्रीं[4] सिंहराजाय कैलासवासिने मेघराजाय स्वाहा ।

[इति] पञ्चममन्त्रः

ॐ ह्रीं नन्दराजाय मेरोर्वामशृङ्गनिवासिनाय मेघराजाय स्वाहा ।

[इति] षष्ठमन्त्रः

ॐ ह्रीं कुम्भराजाय कामशृङ्गमेरुनिवासिनाय मेघराजाय स्वाहा ।

[इति] सप्तममन्त्रः

एते मन्त्रास्तु विज्ञेया[5] कथिता तव सुन्दरि । एकैकस्य च मन्त्रस्य जपमष्टोत्तरं शतम्[6] ।

---

१. मेघद्वितीयाय नमः *ध, स* ।

२ सवले *ध* ।

३. महानिफराजाय *ध*, महानिधरातापं *स* ।

४. ह्रौं *अ* ।

५. विख्याता मेघस्याह्वानकर्मणि *ध, व, स* ।

६. स्मृतम् *व, स* ।

अन्यच्च[1]—ॐ ह्लीं (ह्लौं) क्रौं स्तौं वारुणाय ह्रौं क्रौं ह्लौं पर्जन्याकर्षय महावृष्टिं कुरु कुरु फट् स्वाहा। अयुतजपः ।। अथवा लक्षजपः ।। सहस्र तिलाहुतिं जुहुयात् ।। पूर्णाहुतिं पुनः पुरुषसूक्तं पुनः रुद्राभिषेकं (च) कुर्यात्[2]।

पुष्पं पीतश्च (ञ्च) रक्तश्च (ञ्च) श्वेत[3]पुंकरकस्तथा ।
मूधरादिक् (षु) पश्यन्ति ततः मन्त्रप्रवर्त्तकाः ।।२३।।

[4]नदीनीर [रं] समागम्य प्रभाते विमले जले ।
पूजिता वरदा मेघा आगच्छन्तीह नान्यथा ।।२४।।

पृथिव्यां नवखण्डानि करोत्येकार्णवां तथा[5]।
अम्बुदो गोलकश्चैव गिरिनारोपकस्तथा ।।२५।।

श्रीपर्वता किष्किन्धाश्च कोटितारं तथैव च ।
एतास्तु मेघा विख्याता सप्तैतेऽचलवासिनः ।।२६।।

समन्तात्पूजयेन्मेघं पुष्पधूपादिभिस्तथा ।
वलीकरण संयुक्तं वर्जयित्वा महानदीं ।।२७।।

आषाढेषु च मासेषु रोहिणी वर्षते यदि ।
पुनराषाढसंयोगे भावी वर्षति माधवः ।।२८।।

नैवेद्यं विविधं[6] पूजनीयं प्रयत्नतः ।
प्रवि[7]श्यार्धजलं देवि जपेन्मन्त्रसहस्रकम् ।।२९।।

---

१. तः ।

२. यावत् केवलं *अ*, मातृकायाम् ।

३. [श्वेतकर्बुरकन्तथा] ।

४. तः ५ यावत् केवलं *अ*, मातृकायाम् ।

६. विधिवत् *अ* ।

७. विप्रस्यार्धजले *व*, *स* ।

कुसुमं करवीराख्यं श्रीफलं गुग्गुलं तथा ।
अष्टोत्तरशतं होमं प्रचुरं[८] मधुसर्पिषा ॥३०॥
वर्षते नात्र सन्देहो यथा रुद्रेण भाषितम् ॥३१॥

इति श्रीरुद्रयामले सारोद्धारे उमामहेश्वरसम्वादे मेघमालायां मेघाह्वानं नाम दशमोऽध्यायः ॥१०॥

८. होतव्यं व ।

# एकादशोऽध्यायः

**[ अथ काकलक्षणम् ]**

**ईश्वर उवाच**

वृक्षस्य पूर्वशाखायां वायसं कुरुते गृहम् ।
सुभिक्षं क्षेममारोग्यं षुसुवृष्टिं सस्यसम्पदा ॥१॥

अग्निकोणस्य शाखायां वायसः कुरुते गृहम् ।
सुभिक्षं[1] च विजानीयान्नैव वर्षन्ति माधवः ॥२॥

दक्षिणे यदि शाखायां वायसं कुरुते गृहम् ।
हाहाकारं महारौद्रं विग्रहं च समादिशेत् ॥३॥

शाखामाश्रित्य नैऋर्त्यां वायसं कुरुते गृहम् ।
द्वौ मासौ वर्षते[2] मेघा तुषारं जायते तदा ॥४॥

पश्चिमे[3] दिशि शाखायां वायसं कुरुते गृहम् ।
नैव वृष्टिं विजानीयात् कथितं वायसेन[4] तु ॥५॥

---

१. दुर्भिक्षं ख ।
२. कुरुते अ ।
३. क्रियते पश्चिमे शाखां वायसेन गृहं यदि घ ।
४. महेश्वरि घ ।

फा० १७

वायव्यां कोणगः काको यदा च कुरुते गृहम् ।
नैव[1] वृष्टिं विजानीयाद् वायसस्येति लक्षणम् ।।६।।

उत्तरायां यदा काकः क्रियते गृहमुत्तमम् ।
पुराणं विक्रयेद्धान्यं सुभिक्षं सुखसंयुता[2] ।।७।।

यदि ईशानकोणेषु वायसः कुरुते गृहम् ।
स्वल्पोदकास्तदा मेघा कृषि[3] च परिशुष्यति ।।८।।

यदि वा मध्यशाखायां वायसं कुरुते गृहम् ।
ऊर्ध्वं[4] च पल्लवे (?) शाखां च कुरुते गृहम्[5] ।।९।।

अनावृष्टिं विजानीयात् कथितं काकलक्षणम् ।
बल्मीकभूमिमाश्रित्य वायसं कुरुते गृहम् ।।१०।।

मृत्युचौरभयं विद्यान्नैव वर्षति माधवः ।
शुष्कवृक्षे गृहं कुर्यात् चौरस्य च भयं महत् ।।११।।

राज्ञां विग्रहमाप्नोति महाराजभयं भवेत् ।
अन्यद् ज्ञानं प्रवक्ष्यामि वायसानां यथोदितम् ।।१२।।

शुभमेवाशुभं वापि यथा शास्त्रेषु निश्चितम् ।
एकेन उत्तमं विन्द्याद् द्वाभ्यां चैव तु मध्यमम् ।।१३।।

---

१. काकवृष्टिं विजानीयात् *ध* ।

२. सम्पदा *अ* ।

३. स्वल्पं च जायते शशिः *अ* ।

४. ४ तः ५ यावत् केवलं *व, स* मातृकयोः ।

तृतीये क्षेममारोग्यं व्योधिश्चैव चतुर्थके ।
तरुक्षं मो तथा रुढो घातयक्षस्तथा परे [?] ।।१४।।

शीघ्रं वर्षा विजानीयात्कथितं वायसेन तु ।
आ॰तुरो यदि भुंजानो व्रूतदृष्टिविहंगमा ।।१५।।

शीघ्रं वर्षा विजानीयात्कथितं वायसेन तु[२] ।
वर्षाकाले भवेत्संगः वर्षते खण्डमण्डले ।।१६।।

उष्णकाले चाग्निभयं काकस्य मैथुनं प्रिये ।
पुरुषस्त्रियो यदा दृष्टो मैथुनं कुरुते यदि ।।१७।।

सप्तरात्रस्य मध्ये तु दुःखलाभं च निश्चितम् ।
चातुर्वर्णस्य यत्प्रोक्तं शुभं वा शुभं चिन्तयेत् ।।१८।।

ब्राह्मणः क्षत्रियो वैश्यो शूद्रो वर्णश्चतुष्टयम् ।
ब्राह्मणः पिङ्गनेत्रे स्याद् ज्ञातं तेषां विचक्षणम् ।।१९।।

कृष्णग्रीवो महोदर्यो चक्रया भूमिकं स्मृतम् ।
इदृशं लक्षणं यस्य स च क्षत्रियमुच्यते ।।२०।।

उच्यते च महाशौचं संभूत्वा च वायसः ।
क्षेमं च सुचिरं स स्युः तच्च वैश्यो विनिर्दिशेत् ।।२१।।

रौद्रं च कुरुते घोरं वायसा वायसी यदि ।
इदृशं लक्षणं देवि शूद्रज्ञानं समाचरेत् ।।२२।।

---

१. चोरं अ ।
२. २ तः ३ यावत् केवलं अ मातृकायाम् ।

कृष्णग्रीवोध्रुवं विन्द्यात् मध्यमं च ध्रुवं भवेत् ।
शीघ्रं च ब्रह्मणो विन्द्यात् क्षत्रियश्च दिनत्रयम् ।।२३।।

सप्तरात्रस्य[1] वै[2]श्यस्तु शूद्रस्य दर्शनेन तु ।।२४।।

इति श्रीरुद्रयामले सारोद्धारे उमामहेश्वरसम्बादे मेघमालायामर्घकाण्डे काकफलाध्यायो नामैकादशोऽध्यायः ।।११।।

।। इति श्रीरुद्रयामले सारोद्धारे उमामहेश्वरसंवादे मेघमाला समाप्तः ।।

---

१. सप्तरात्रेण ध, व, स ।
२. वैश्यस्य[ध, स ।

## प्रक्षिप्तः पाठः

[ अथकेतूदयफलम् ]

[1]अश्विन्यामुदिताः केतुः हन्यादशकपालकम् (?) ।
भरण्यां च किरातेशं कृत्तिकायां कलिंगपः ॥१॥

रोहिणी सुरसेनेश मृगे चोसि नराधिपाः ।
आर्द्रायां जालजाधीशं भष्मकेशं पुनर्वसु ॥२॥

पुष्ये च मृगधो धीश सार्पा पाङ्काशिकाधियम् ।
मघ्ययां मागधनाथं च पूर्वायां पाण्डुनायकं ॥३॥

उज्जयिन्यां नृपं हन्यात् उत्तराफाल्गुनीगतः ।
ईदण्डकाधिपतेर्हस्ते चित्रायां कुरु भूमिपं ॥४॥

स्वात्यां काश्मीर कम्बोजभूपतिनां विनाशकः ।
इक्ष्वाकुरलदेशानां विशाखायां विनाशकः ॥५॥

मैत्रे पोरंढसानाथं च सर्वभौमं तथैन्द्रके ।
अघभद्रकनाथो च मूलस्थो हन्ति निश्चितम् ॥६॥

---

१. केतूदयफलस्य वर्णनं केवलं ध, मातृकायामुपलभ्यते ।

पूर्वाषाढे काशीनाथं उत्तराषाढके तथा ।
बौधेयसि वैधेश श्रृणु कैकयेश्वरम् ।।७।।

वासौ पे च तदाधीशं वरुणो सिंहलेश्वरम् ।
पूर्वभाद्रं वाङ्गं च नैमिशेषं तथोत्तरे ।।८।।

रेवत्यामुदितः केतुः किराताधिपतेर्वधः ।
धूम्रकारः समूढश्च केतुर्विश्वस्य पीडनम् ।।९।।

॥ इति केतूदयफलम ॥

॥ क्रीं कालिकायै नमः ॥

## ॥ प्रथम अध्याय ॥

### (१—८)

कैलास पर्वत के शिखर पर आसीन कोटिगणों, अप्सराओं ओर किन्नरों से सुशोभितः सिद्ध, गन्धर्व, विद्याधर, मालाधर, यक्ष एवं महा उग्रगणों से युक्त, वामाङ्ग में स्थित श्री ललिता देवी, मस्तक पर चन्द्र, कण्ठ में वासुकीनाग लिपटाए, तीन नेत्रों, पाँच मुखों एवं दश भुजाओं से विभूषित, उन श्री भैरव परमेश्वर को, सिद्ध, गन्धर्व और किन्नर सहित सभी देवगण प्रणाम कर आसनस्थ थे।

ऐसे भगवान शङ्कर को देखकर शम्भु पत्नी देवी पार्वती कहती हैं। हे देवताओं के स्वामी ! श्रेष्ठ देव ! आपको नमस्कार है। श्री पार्वती जो ने कहा—तीनों लोकों में सृष्टिसंहारक के रूप में विख्यात हे देवाधिदेव ! हे अनादि परमेश्वर ! मेघ किस प्रकार का होता है, विद्युल्लता क्यों छिटकती है, इनके वर्ण, रूप एवं शरीर कैसे हैं ?

श्री महादेव जी ने कहा—हे देवि ! बारह हजार ग्रन्थों के अध्ययन से ज्ञात (बारह हजार मेघों में से) परम गोपनीय मेघमालाओं को यथाक्रम मैं कहता हूं (उसे) सुनो।

### (९—१३)

मेघ के चार वर्णों का वर्णन विशेष रूप से सभी शास्त्रों में किया गया है। पूर्वाह्न के मेघ का ब्राह्मण वर्ण, मध्याह्न कालिक क्षत्रियवर्ण, अपराह्न कालिक वैश्यवर्ण और सूर्यास्त कालिक शूद्र वर्ण होता है।

चाण्डालरूपी मेघ [गायें जहाँ चरती हैं] [1]चारागाह में वरसता है। ब्राह्मणवर्ण का मेघ श्वेत रङ्ग का, क्षत्रियवर्ण का मेघ लाल रङ्ग का, वैश्यवर्ण का मेघ पीले वर्ण का और शूद्रवर्ण का मेघ कृष्ण वर्ण का होता है। चाण्डाल[2] संज्ञक मेघ चितकवरा होता है।

ब्राह्मण संज्ञक मेघ गम्भीर (मधुर) गर्जन करता है, क्षत्रिय मेघ गुम-गुमाता है, वैश्यमेघ घोर गर्जन करता है और शूद्रमेघ ठमठमाता है।

(१४—१६)

यहाँ मेघों के लक्षण वताये गये हैं, लेकिन कार्तिक शुक्लपक्ष की नन्दा तिथि को ये पाँच प्रकार के होते हैं। यथा— (१) श्वेत (२) रक्त (३) पीत (४) कृष्ण तथा (५) कांस्य या ताम्रवर्ण। मेघ गर्भ के ये पाँच रूप हैं।

**विशेष :**—नन्दा तिथि—प्रतिपद्, षष्ठी, और एकादशी मानी जाती हैं। मुहूर्त्तचिन्तामणिकार रामाचार्य ने सूर्येशपञ्चाग्निरसाष्टनन्दाः में नन्दा शब्द का अर्थ नवमी किया है।

(१७)

प्रतिपद् षष्ठी, एकादशी, इन तीनों के पाँचों रुपों का योग पन्द्रह होता है (इसलिए इन तीनों तिथियों में वर्षा का जितना योग होगा उतना) सोलहकलाओं वाली अमावस्या में (वर्षा का योग होगा) या प्रतिपद्, द्वितीया आदि के क्रम से पन्द्रह तिथियों में क्रमशः एक, दो, तीन आदि पन्द्रह कलाएँ होंगी और अमावास्या के दिन १६ कलाएँ होंगी।

(१८—२३ अ)

कार्तिक मास में मेघ गर्जन होने पर चार महीनों तक वर्षा का योग

---

१. उपारताः पश्चिमरात्रि गोचरात् किराता० ४।१०

२. मूल में यहाँ विप्रश्चाण्डाल शब्द प्रयुक्त है, इसमें विप्र शब्द की संगति नहीं बैठ पायी है। जिसमें विभिन्न रङ्ग हों कहीं लाल, कहीं पीला, कहीं उजला आदि, उसे विचित्र कहते हैं।

होता है। (अर्थात् कार्तिक, मार्गशीर्ष, पौष, माघ इन चारों मासों में वर्षा होती है।) कार्तिक मास में मेघपुष्प संभव होने पर, कार्तिक में उत्तम मेघ होता है और वहाँ सुभिक्ष होता है। [यद्यपि सर्वत्र सुभिक्ष ही पाठ मिला है, लेकिन यदि कार्तिकादि चार महीनों में वर्षा होगी; तो सभी प्रकार के अन्न नष्ट हो जाएंगे और दुर्भिक्ष हो जायगा। इसलिए व्यवहारिक दृष्टि से यह उक्ति विचारणीय है।]

परम्परा से ज्ञात है कि कार्तिक में यदि मेघ गरजता है तो अग्रिम-वर्ष चातुर्मास्य (आषाढ़, श्रावण, भाद्र और आश्विन) में अच्छी वर्षा होती है और सुभिक्ष होता है।

पार्वती ने कहा—

मेघों के वर्ण और स्वरूप जिस प्रकार के हैं, मैंने सुने ; अब मेघों की गर्जना कैसी होती है, वह बताएं, ताकि मुझे ज्ञान हो।

महादेव ने कहा—

हे देवि ! मेघों के दिव्य गर्भ एवं रूप आदि तो सुने। हे सुन्दरी अब मेघों की संख्याओं को सुनें।

मन्दराचल के उत्तर में मेघों के दश राजा हैं। कैलास, विकट और जठर पर्वत पर क्रमशः दश-दश मेघ अवस्थित हैं। सुमेरु शृङ्ग, पारिजात, हिमालय तथा गन्धमादन पर्वत पर भी दश-दश मेघराज हैं। इसके अतिरिक्त भी असंख्य मेघ विख्यात हैं जिनके रूप दर्शन मात्र से सुख शान्ति होती है।

(२३ब—३१अ)

मर्त्यलोक में जो मेघ हैं, वे निश्चय ही हानिपद्र हैं। शुद्धता पूर्वक ध्यान कर जब मैंने मेघों के आवाहन किए तो दिव्य आभूषणों से सुशोभित मेघगण आकर मुझ शंभु को स्तुतिपूर्वक प्रणामकर

मेघ ने कहा—

हे देव ! किसलिए स्मरण किया है, हे प्रभो आदेश दें। महादेव ने

कहा—उपकार करने के लिए मर्त्यलोक जाना चाहिए, क्योंकि पार्वती जी को स्वरूप वर्णन की जिज्ञासा है। चारों महीनों में वर्षा होने से सुभिक्ष भी होता है।।

मेघ ने कहा ! मेघों के विख्यात दशराजा, इक्कीस सेनापति और दश कोटि परिचारक इस ब्रह्माण्ड में स्थित सातों द्वीपों के अधिपति हैं जो क्रमसे मैंने कहे, हे महादेवि ! इतना कहकर मेघ के चले जाने पर पार्वती पुनः महादेव से पूछती है। मेघों का राजा कौन है और इनके प्रवन्ध (प्रशासन व्यवस्था) कैसे हैं ? महादेव ने कहा—

(३१ब—३४अ)

हे देवि ! मेघों के परम गोपनीय उत्तम सद्भाव जो वारह महीनों में प्रसिद्ध हैं। हे सुन्दरी १—सुबुध २—नन्दशाली ३—कन्यद ४—पृथुश्रवा ५—वासुकी ६—तक्षक ७—विकर्त ८—सार्बुद ९—हेममाली १०—जलेन्द्र ११—वज्रदंष्ट्र १२—विषप्रद ये बारह मेघ मैंने तुम्हें कहे।

(३४ब—३८अ)

**मेषराशि में गुरु का फल—**

चैत्रादि मास में यथाक्रम मेष राशि में गुरु के स्थित रहने पर सुबुध नामक मेघ और सम्वत्सर में चैत राजा हो, उस शुद्ध सम्वत्सर में सर्वत्र सुवृष्टि कल्याण, सुभिक्ष, आरोग्य और राजाओं के विग्रह शान्त हों। विभिन्न प्रकार के अन्न उपजे, पृथ्वी सर्वधान्य समन्विता हो और कपास लवण तथा गुड़ का पाँच मासों तक संग्रह करने पर पर्याप्त लाभ हो।

(३८ब—४२)

**वृषराशि में गुरु का फल—**

वृषराशि में गुरु के रहने पर नन्दशाली नामक मेघ हो और वैशाख मास सम्वत्सर में राजा हो। गाएँ वहुत दूध देने वाली हो, पृथ्वी पर अधिक अन्न उपजे, महावृष्टि और सुभिक्ष हो।

वर्ष भर में अन्नों के निःसंशय तीन प्रकार के भाव हों। कपास,

तिल, गेहूं, सोंठ, नमक, गुड़, कालीमिर्च, वस्त्र, सुपाड़ी, परवल, आँवला, मसूर, उड़द, सिन्दूर और चना का दश मासों तक संग्रह करके रखने पर द्विगुणित लाभ होता है।

(४३—४८)

**मिथुनराशि में गुरु का फल—**

मिथुनराशि में गुरु के रहने पर कन्यद नामका मेघ और सम्वत्सर में ज्येष्ठमास राजा हो। रंग विरंगे मेघों से खण्डवृष्टि हो। भाव (मंहगाई) मध्यम रहे और सुभिक्ष हो। राजाओं का परस्पर विरोध हो और विग्रह हो। कपास, तिल, गुड़, नमक, हींग, सोंठ, कालीमिर्च, लालवस्त्र, यव, सरसों, धान्य, गेहूं, चना, मसूर, त्रिकुटा (सोंठ, मिर्च और पीपल का चूर्ण एक आयुर्वेदिक औषधि) का माघ और फाल्गुन में संग्रह करे, कपास, तिल और मूंग का दो महीने वाद विक्रय कर दे। सुगन्धित पदार्थ एवं धान्य का, चैत्र से ज्येष्ठ तक संग्रह करे और श्रावण में विक्रय करे, तो लाभ हो।

(४६—५३)

**कर्कराशि में गुरु का फल—**

कर्कराशि में गुरु के जाने पर पृथुश्रवा नाम का मेघ हो और आषाढ़ मास उस वर्ष का राजा हो। उस समय अत्यन्त वृष्टि करने वाला मेघ और वहुत प्रकार के धान्य हों। भाव (महंगाई) सम रहे। राजा का विरोध हो और राजभङ्ग हो। पृथ्वी पर वहुत पाप हो। उस समय बुद्धिमान् व्यक्ति सभी वस्तुओं का संग्रह करे। जैसे :—नमक, तिल, कपास, हींग, सोंठ, वचा, कालीमिर्च, पद्मक, कुङ्कुम और गन्धक। [क्योंकि] एक पक्ष के भीतर समर्घ हो और पृथ्वी पर सुभिक्ष हो।

(५४—५७)

**सिंह राशि में गुरु का फल—**

सिंह राशि में गुरु के रहने पर वासुकी नामक मेघ हो और श्रावण मास सम्वत्सर का राजा हो। इस समय गाएँ वहुत दूध देने वाली हों, सर्वत्र

कल्याण हो और अन्नों का भाव सम रहे। विज्ञजन सभी चतुष्पद् जन्तुओं का संग्रह करे और वैशाख तथा ज्येष्ठ के मध्य निश्चित रूप से विक्रय करे तो, द्विगुणित लाभ हो।

(५७ब– ६३अ)

**कन्याराशि में गुरु का फल—**

कन्या राशि में गुरु के रहने पर तक्षक नाम का मेघ और भाद्रमास सम्वत्सर का राजा हो। उस समय सुभिक्ष हो और अनेक प्रकार के धर्म-कर्म हों। भैरव तथा ब्राह्मण देवताओं को प्रणाम कर चना, यव, कर्पास, त्रिकटु सोंठ, कालीमिर्च, पीप्पल और सरसों का माघ-फाल्गुन तक अर्थात् छः मासों तक संग्रह करे और उसके बाद विक्रय करे तो, द्विगुणित लाभ हो। गेहूँ, मधु, चीनी, कपास और पटसूत्र आदि वस्तुओं का संग्रह करे तो, निश्चय ही लाभ हो।यहाँ कोई विचिकित्सा नहीं करनी चाहिए। स्वर्ण, राङ्गा, मञ्जीठा, कुङ्कुम, सोंठ, हींग, कालीमिर्च, जायफल, कङ्कोल तथा मगर के व्यापार में भी लाभ हो।

(६३ब—६८अ)

**तुलाराशि में गुरु का फल—**

गुरु जब तुला राशि में जाय तो विकर्त्ता नामका मेघ हो और सम्वत्सर का राजा आश्विन हो, रोगादि उपद्रव में वृद्धि हो, सभी प्रकार के अन्न सस्ते हों और सुभिक्ष हो। अतुलनीय (अत्यधिक) भाण्डों का संग्रह करे। कपास, गुड़, हींग, कालीमिर्च, सोंठ, कुङ्कुम, जायफल, कर्पूर और पटसूत्र आदि द्रव्यों का चार महीनों तक संग्रह करे तो द्विगुणित लाभ हो इसे व्यास जी ने स्पष्ट कहा है।

(६८ब—७५अ)

**वृश्चिक राशि में गुरु का फल—**

वृश्चिक राशि में गुरु के जाने पर सारम्बुद नामक मेघ हो, सम्वत्सर का राजा कार्तिक मास हो, खण्डवृष्टि और दुर्भिक्ष हो, उस वर्ष कुहरा

अधिक हो और सर्प आदि का भय हो। लोगों की बुद्धि पापरत रहे, ईश्वर के प्रति अश्रद्धा हो और राजा तस्करवृत्ति वाला हो। गाय, महिष, बकरी, गेंहूं, चना, उड़द त्रिकुटा (त्तिकटु) सोंठ, मिर्च, पीप्पल और सरसों का पाँच मासों तक संग्रह करे और श्रावण मास में विक्री कर दे तो, द्विगुणित लाभ जाने, यहाँ कोई संशय नहीं है। दूसरे द्रव्य ताम्वा, शीशा, लोहा, हल्दी, वच, कूठ, दाख, लौंग एवं इलायची आदि में चार माह के भीतर त्रिगुणित लाभ हो।

(७५ब—७८)

**धनूराशि में गुरु का फल—**

धनूराशि में गुरु के जाने पर हेममाली नामका मेघ हो सम्वत्सर में मार्गशीर्ष राजा हो, दिव्यवृष्टि हो, सभी प्रकार के अन्न उपजे और सामान्य मूल्य की वस्तुएँ भी वर्षा ऋतु में महंगी हों। गुड़, तैल, नमक तथा चतुष्पद जन्तुओं का सात मासों तक संग्रह करे तो, त्रिगुणित लाभ हो।

(७९—८२)

**मकरराशि में गुरु का फल—**

मकरराशि में गुरु के रहने पर जलेन्द्र नामका मेघ हो, सम्वत्सर का राजा पौष मास हो, चौपाया पशुओं का नाश हो, पर मृगादि पशुसमूह सुखी रहे, राजाओं में परस्पर विरोध तथा युद्ध हों। खण्डवृष्टि हो, दुर्भिक्ष हो, मनुष्य पापकर्म में लीन हो, चारों तरफ हाहाकार हो और तीन मासों तक महंगाई रहे। इसमें कोई संशय नहीं है।

(८३—९०)

**कुम्भराशि में गुरु का फल—**

कुम्भराशि में गुरु के जाने पर वज्रदंष्ट्र नामका मेघ हो, सम्वत्सर का राजा माघ मास हो, पृथ्वी में नवों खण्डों में सवल मेघ हो, सुभिक्ष हो और धान्य वृद्धि हो। देवगण, ऋषिगण, विप्रगण और पण्डितगण पूजित हों। सुहागा, मञ्जीठा और लोहा महंगे हों। ज्योतिषीगण प्रसन्न

रहे। मनुष्यों को जीर्णरोग के कारण हैजा आदि रोग हों, सर्वत्र धान्योत्पत्ति हो और भाव मन्दा रहे। इसमें संशय नहीं है। विज्ञजन तीन मासों तक कपास का संग्रह करे, चैत्र एवं वैशाख के मध्य गेंहू और जुन्हरी, त्रिकुटा, चना, राई, मज्जीठा और मूंग का संग्रह करे। जीरा, सरसों तथा अजवाइन, हर्रे और चीनी आदि का तीन मासों तक संग्रह करे तो, द्विगुणित लाभ हो। यहाँ सन्देह न करे।

(९१—९७)

**मीनराशि में गुरु का फल—**

मीनराशि में गुरु के जाने पर विषप्रभ नामका मेघ हो सम्वत्सर का राजा फाल्गुन मास हो, भूमि के नवों खण्डों में अलग-अलग मेघ वर्षा करे, अन्नादि के भाव मन्द हों, मनुष्य रोग से पीड़ित हों, कण्ठोदर-जलोदर प्रभृति घोर व्याधि हो। दिन प्रति दिन जीव हत्या एवं घात-प्रतिघात हो, पूर्व में सुभिक्ष हो, दक्षिण में महंगाई, पश्चिम में सुभिक्ष और उत्तर में मध्यम समय रहे और लोक में धनाभाव के कारण देवों की पूजा न हो। छः मासों तक महंगाई रहेगी इसमें कोई संशय नहीं है। कपास, हींग, सोंठ, कालीमिर्च और कुङ्कुम आदि का पाँच मासों तक संग्रह करे और उसके बाद बेचे तो व्यास ने कहा है कि उसे त्रिगुणित लाभ हो।



